# कातन्त्रच्छन्दःप्रक्रिया


राजकीयसंस्कृतविद्यालयाध्यापकमहामहोपाध्याय-

श्रीचन्द्रकान्ततर्कालङ्कारेण

विरचिता ।



शेरपुरनगरस्थान्यतमभूस्वामिना विद्याविनोदेन

श्रीहरचन्द्रचतुर्धुरीणेन

प्रकाशिता ।


# KĀTANTRA CCHANDAH PRAKRIYĀ.


BY

MAHĀMAHOPĀDHYAYĀ CANDRA-KĀNTA TARKĀLANKĀRA

*Professor of Hindu Law, Saṃskṛta College.*



PUBLISHED BY

ÇRIYUKTA HARACANDRA CAUDHURĪ VIDYĀVINODA,

*One of the Zemindars of Town Sherpur.*

1896.

# अनुक्रमणिका ।

संक्षेपेण लौकिकानि पदानि व्युत्पिपादयिषुणा सर्व्ववर्म्मणाऽऽचार्य्येण कलापापरनामधेयं कातन्त्रं नाम व्याकरणं प्रणीतम् । आख्यातान्तं विरच्य प्रसिद्धत्वादाचार्य्येणोपेक्षितं कृदन्तशब्दजातं कात्यायनो व्युत्पादितवान् । भगवता दुर्गसिंहेनाचार्य्यसूत्राणां कात्यायनसूत्राणां चोपरि समीचीना वृत्तिर्व्विरचि । सैवेदानीं पठनपाठनयोः प्रचरति । कात्यायनः किल कतिचित् छान्दसानि कृदन्तपदान्यपि व्युत्पादितवान् ।

कृदन्तभिन्नानां छान्दसानां पदानां कृदन्तानामपि सर्व्वेषां छान्दसपदानां व्युत्पादनं कातन्त्रव्याकरणे नास्ति । कात्यायनोऽपि लोके यानि प्रयुज्यन्ते तान्येव छान्दसानि पदानि व्युत्पादयामास न सर्व्वाणि ।

तदेवं कातन्त्रे छान्दसप्रक्रियाया उपेक्षितत्वात् कातन्त्रानुसारिणी कातन्त्रच्छन्दःप्रक्रियेयमस्माभिर्विरचिता । औणादिका अपि छान्दसाः शब्दा व्युत्पादिताः । दिङ्मात्रप्रदर्शनार्थं नैघण्टुकसमाम्नायपठितानामपि कतिपयेषां पदानां व्युत्पत्तिः प्रदर्शिता । सूत्रं वृत्तिश्चोभयमपि मयैव व्यरचि । भगवतो दुर्गसिंहस्यैव रीत्या वृत्तिरत्र निर्म्मिता । क्वचित् क्वचित् तदीयमंशमप्युद्धृतम् । एवं काशिकादितोऽपि कुत्र-

चित् किञ्चिदुद्धृतमस्ति। पाणिनिसूत्रं पातञ्जलमहाभाष्यं कात्यायनवार्त्तिकं काशिकां सिद्धान्तकौमुदीञ्च प्रधानतोऽनुसृत्य विनिर्म्मितेयं मया। भाष्यप्रदीपोद्योत-लघुशब्देन्दुशेखर-मनोरमादिकं च क्वचित् क्वचित् दृष्टम्। सन्दिग्धेषु स्थलेषु संस्कृतविद्यालयस्यान्यतमाध्यापकैर्बन्धुवरैर्भारद्वाजगोविन्दशास्त्रिभिः समं परामर्शः कृतः। प्रूफपत्रञ्च तैः प्रायशो दृष्टम्। किं बहुना, तैरत्र बहूपकृतोऽहम्। कुत्रचित् कुत्रचित् काशीस्थानां प्रख्यातनाम्नां पण्डितानामपि मतमधिगतम्। वाराणसीस्थेभ्यः परमसुहृद्वरोऽग्निहोत्रिभ्यः सुब्रह्मण्यशास्त्रिभ्यः कतिचित् श्रुतोदाहरणानि समासादितानि। तथैव बङ्गसामगेभ्यः सुहृद्वर्य्येभ्यः सत्यव्रतसामश्रमिभ्योऽपि कियानुपकारः प्राप्तः। पाणिन्यादिभिरननुशिष्टान्यपि कतिचित् पदानि प्रयोग-दर्शनादिह व्युत्पादितानि। प्रयोगदर्शनादेव क्वचित् क्वचित् पाणिनितन्त्ररीतिमननुसृत्य प्रयोगानुसारिणी रीति-रनुसृता। इयञ्च कातन्त्रस्य परिशिष्टतया व्यवहरिष्यते इत्या-शास्महे। अस्याः परिशुद्धौ यथामति कृतः प्रयत्नः। तथापि भ्रान्तेः पुरुषधर्म्मत्वाद्वा मदीयाद्बुद्धिदौर्बल्याद्वा या या भ्रान्ति-रत्र विद्वद्भिरुपलप्स्यते, तैः कृपया तत्सर्व्वमहं बोधयितव्य इति कृतोऽयमञ्जलिः। यैर्विपश्चिद्भिरत्रोपकृतोऽहं, तेभ्यः कृतज्ञता-प्रवितमुपक्रियते प्रणामाञ्जलिरिति शिवम्।

कलिकाताभिधाननगर्य्यां राजकीयसंस्कृतविद्यालयः } श्रीचन्द्रकान्तदेवशर्म्मणः

# शुद्धिपत्रम् ।

| पृष्ठे | पंक्तौ | अशुद्धम् । | शुद्धम् । |
| --- | --- | --- | --- |
| ७ | ११ | घृतैर्ल | घृतैर्ग |
| १० | ६ | कथं | तथा, |
| १४ | १ | कार | कारः |
| १४ | ९ | ग्रेधा | ग्रेधा |
| १५ | ११ | सिद्धान्तकौमुद्यां | काशिकायां |
| २५ | १२ | इत्यमीध | इत्यमीध् |
| २५ | २१ | ऽध्यर्याः३ड | ऽध्यर्याः३ड । |
| २६ | ५ | आवश्युत् | ग्रावश्युत् |
| २८ | १६ | आगम | अगम |
| ३१ | ८ | ब्रदन्यत्रापि | ब्रतोऽन्यत्रापि |
| ३५ | ९ | विड्राड् | विराड् |
| ३६ | १५ | र्नी | र्नी |
| ४४ | २ | प्राप्त | प्राप्ते |
| ६४ | ७ | तिसर्णा | तिसृणां |
| ६४ | १८ | ते | त्रे |
| ६४ | १९ | प्ररतक्षि | प्ररतक्षि |
| ६६ | १ | नदीकारात् सेः | ङीपोनदीकारात् सेः |
| ७१ | ७ | स्तर्श्येयं | स्वार्थ्येयं |
| ७२ | १ | वीत | वींत |
| ७२ | १५ | ततक्षि | तक्षि |
| ७२ | १३ | आम्नानां | अम्नानां |

| | | | |
|---|---|---|---|
| ७६ | १ | तानि धर्म्माणि प्रथमा न्यासन्। ऋ० १० ९०।१६ ॥ | शीर्क्ष्णो द्यौः कणुते स्वाय धर्मणे। ऋ० ४।५३।३ ॥ |
| ७८ | १० | बीभत्सो | बीभत्सु मन्ती |
| ७८ | १५ | प वसि | पवसि |
| ८२ | ११ | जुहोती | जुहोती |
| ८४ | ८ | ब्रह्म | ब्रह्म: |
| ८५ | १ | यामरण्य | यामरण्ये |
| ९२ | ५ | १०। | ऋ० १०। |
| १०७ | ८ | अष्टा | अष्टा |
| ११५ | १७ | वत्ये | वेत्ये |
| १२२ | ९ | षष्ठ्यन्ताद | षष्ठ्यन्ताद् |
| १२८ | २ | रूप | रूप |
| १३६ | १२ | त्रिश्वारं | विश्वार्व |
| १३७ | ३ | प ष्ठा | पष्ठा |
| १४० | ७ | द्वयनसु | द्वयनसु |
| १५० | १३ | २१।५ | २१।६ |
| १५८ | १ | सोम्य | सोम्ये |
| १६० | ३ | व्ययो | वयो |
| १८१ | १९ | । गुण | गुण |
| १९४ | १५ | प्रत्ययेन | प्रत्ययी न |
| २०० | ४ | नाम्न्यपथ | नाम्न्यपथ |
| २०२ | १ | प्लय | प्लय |
| २०४ | २ | युद्दूयते | युद्दूयते |
| २२० | १ | कर्णिन: | कर्णिणः |
| २२५ | १६ | तनि | तन्नि |
| २२६ | १३ | जनीधी | जनीधीतो |
| २३० | ७ | भ्रम | भ्रम |

| | | | |
|---|---|---|---|
| २२८ | २० | ह्रंख | ऋंख |
| २३० | १८ | विहि | विंहि |
| २३३ | १५ | पश्चाम्म कारागमः | पश्चाम्मकारागमः |
| २३५ | २ | चुत्वया | चूत्वयी |
| २३५ | १४ | विहता | विहृता |
| २३६ | २ | निपात्यते | निपात्येते |
| २३७ | ७ | गंत्वयः | गंत्वयंः |
| २३८ | १ | समहि | समुदि |
| २३८ | १२ | ग्राकस्थानेयो | ग्राकल्यानेयौ |
| २४० | ७ | मिथ | मिथ |

मुद्रायन्त्रदोषात् क्वचित् क्वचित् बवयोर्विपर्य्ययो जातः तत्पर्य्यावर्त्तनं विपश्चिद्भिः करणीयं ।

ओँ

# कातन्त्रछन्दःप्रक्रिया

सन्धौ प्रथमः पादः

शब्दब्रह्म नमस्कृत्य पितरौ च गुरूंस्तथा ।
छान्दसी चन्द्रकान्तेन कातन्त्रप्रक्रियोच्यते ॥

## छन्दसि प्रोपसमुदां द्विः पादपूरणे बहुलम् ॥ १

छन्दसि प्र उप सम् उत् इत्येतेषां बहुलं द्विर्वचनं भवति । पादपूरणे विषये । द्विर्वचनेन चेत् पादः पूर्य्यते इत्यर्थः । वचनमिति गम्यते ।

प्रप्रायमग्निर्भरतस्य शृण्वे । ऋ० ७।८।४ ॥ उपोप ववधि अवः । ऋ० ८।७४।९ ॥ संसमिद्युवसे वृषन् । ऋ० १०।१९१।१ ॥ किं नोदुदु हर्षसे दातवा उ । ऋ० ४।२१।९ ॥ न च भवति । त्वामभि प्र णोनुमः । ऋ० १।११।२ ॥ कुर्वन्नस्य हरय उप ... ॥ ऋ० ४।१६।१ ॥ सं सूर्येण रोचते । ऋ० ९।२।६ ॥ ... क्वाप्सुजित । ऋ० ९।११।७ ॥

पादपूरणे इति किम् । प्र च आयूंषि तारिषत् ।

ऋ० १०।१८६।१ ॥ उप त्वाग्ने दिवे दिवे । ऋ० १।१।७ ॥ समुषद्भिरजायथाः । ऋ० १।६।३ ॥ प्रति त्वामुदहासत । ऋ० १।८।४ ॥

छन्दसीत्येतदा शास्त्रपरिसमाप्तेरधिकृतं वेदितव्यम् । सर्व्व-एवामी विधयश्छन्दसि प्रवर्त्तन्ते । केचित्तु छान्दसाः प्रयोगा-भाषायामपि प्रयुज्यन्ते ।

प्रप्रपूज्य महादेवं संसंयम्य मनः सदा ।
उपोपहाय संसर्गमुदुन्नतः स तापसः ॥

इत्येवमादेः प्रामाणिकत्वे तत्राप्युक्तैव गतिरनुसरणीया । जयादित्यो ह्यप्रयोगममीषां भाषायामाह । प्राक् छन्दोग्रहणं मङ्गलार्थम् ।

## दीर्घस्तुनुघमक्षुकुत्रोरुष्याणामृचि ॥ २

तु नु घ मक्षु कु त्र उरुष्य इत्येतेषां बहुलं दीर्घो भवति । ऋग्विषये प्रयोगे ।

तु । आ तू न इंद्र वृत्रहन् । ऋ० ४।३२।१ ॥ आ तू षिंच हरिमीं द्रोरुपस्थे । ऋ० १०।१०१।१० ॥ नु । प्र नू स मर्तः शवसा जनाँ अति । ऋ० १।६४।१३ ॥ नू रोदसी अभिष्टुते वसिष्ठैः । ऋ० ७।३९।७ ॥ नू मर्तो दयते सनिष्यन् यः । तै० ब्रा० २।४।३ । इति च । घ । यद्धा घा सत्यमुत यत्र विश्व । ऋ० ५।८५।८ ॥ वयं घा ते अपूर्व्या । ऋ० ८।६६।११ ॥ मक्षु । प्रातर्मक्षू धियावसुर्जगम्यात् । ऋ० १।६३।९॥ मक्षू समुद्रादुत वा पुरीषात् । ऋ० ४।२१।३ ॥ कु । दीध्याना कूचक्रेव

सिंचन् । ऋ०१०।१०२।११ ॥ कृष्ठोदेवावश्विना । ऋ० ५।७४।१ ॥ ञ । अत्रा ते भद्रा रशना अपश्यं । ऋ० १।१६३।५ ॥ यत्रा नः पूर्व्वे पितरः परेयुः । ऋ० १०।१४।७ ॥ उरुष्य । उरुष्या णो अभिशस्तेः । ऋ० १।९१।१५ ॥ उरुष्या णो अघायतः समस्मात् । वा० मा० ३।२६ ॥ उरुष्येतीतद्रक्षणार्थं कण्ड्वादौ पठ्यते ।

न च भवति । मायामू तु यज्ञियानामेतां । ऋ० १०।८८।६ ॥ कोनु वां मित्रावरुणावृतायन् । ऋ० ५।४१।१ ॥ वयं घ त्वा सुतावन्तः । सा० उ० २।२।१२।१ ॥ मक्षुंगमाभिरूतिभिः । ऋ० ८।२२।१६ ॥ यः कुक्षिः सोमपातमः । ऋ० १।८।७ ॥ अनूनोदत्र हस्तयतो अद्रिः । ऋ० ५।४५।७ ॥ उरुष्य राय एषोयजस्व । वा० मा० ७।४ ॥ विश्वस्मात्सीमघायत उरुष्य । ऋ० ४।२।६ ॥

ऋचीति किम् । अत्र पितरो मादयध्वं । वा० मा० २।३१ ॥ सम्भृत्या एव सम्भाराः । यत्र यत्रैवास्य न्यक्तं तत एवैनमवरुन्धे । तै० स० १।५।२ ॥ इति तु पञ्चम्यामाहुतावापः पुरुषवचसो-भवन्ति । छा० उ० ५।९।१ ॥ कथं नु भगवः स आदेशो भवति । छा० उ० ६।१।३ ॥

## निपाते नामिनः सौ ॥ ३

निपाते सुशब्दे परतो नामिनो बहुलं दीर्घो भवति । ऋग्विषये प्रयोगे ।

अभी षु णः सखीनां । ऋ० ४।३१।३ ॥ ऊर्ध्व ऊ षु ण ऊतये । ऋ० १।३६।१३ ॥ न च भवति । इमा उ षु श्रुधी गिरः । ऋ० १।२६।५ ॥

निपाते इति किम् । प्रेषो यंधि सुतपावन् वाजान् । ऋ० ६।२४।८ ॥ मामिन इति किम् । भराय सु भरत भागमृत्वियं । ऋ० १०।१००।२ ॥ साविति किम् । इन्द्रमभि प्रगायत । ऋ० १।५।१ ॥ ऋचीत्येव । सिंह्यसि सुप्रजावनी रायस्पोषवनिः । वा० मा० ५।१२ ॥

## निपातस्य च ॥ ४

साविति न स्मर्य्यते । निपातस्य च बहुलं दीर्घो भवति । ऋग्विषये प्रयोगे । अर्थादन्तस्य स्वरस्य ।

एवा पित्रे विश्वदेवाय वृष्णे । ऋ० ४।५०।६ ॥ अच्छा वो देवीमुषसं विभातीं । ऋ० ३।६१।५ ॥ अच्छा दूतं वृणीमहे । ऋ० १।४४।३ ॥

कथम् । कदू महीरधृष्टाः । ऋ० ८।६६।१० ॥ अमुं च लोकमिदमू च सर्व्वम् । त० ब्रा० ३।१।२ ॥ आद्यन्तवद्भावात् । न च भवति । पोषमेव दिवे दिवे । ऋ० १।१।३ ॥ अस्मा उ ते महि महे विधेम । ऋ० ६।१।१० ॥

ऋचीतेरव । अद्य मध्यतो मेद उद्भृतं पुरा द्वेषोभ्यः । वा० मा० २१।४३ ॥ तथा । एताएव देवताः स्वेन भागधेयेनोपधावति । तै० स० २।३।७ ॥ प्रजाएव तद्यजमानः पोषयति । तै० ब्रा० १।६।२ ॥ अन्तस्य स्वरस्येतेरव । नमोभरंत एमसि । ऋ० १।१।७ ॥ निपातविशेषाणामिच्छाय दीर्घोदृश्यते ।

## ऋचि लोपस्त्रेरनादेः ॥ ५

ऋचीति निवृत्तम् । ऋक्शब्दे परतस्त्रिशब्दस्यानादिवर्णमात्रस्य लोपो भवति ।

तिस्रऋचोयत्र तत् तृचं सूक्तम् । अथो यदेतं तृचमन्वाह । तै० स० १।५।८ ॥ तृच उत्तमो भवति । ता० ब्रा० १३।१।१२ ॥ त्र्यचमित्यादिं भाषायाम् ।

ऋचीति किम् । त्र्यनीकः पत्यते माहिनावान् । ऋ० ३।५६।३ ॥ त्रीडं भवति त्रिरात्रस्य धृत्यै । ता० ब्रा० १३।६।१४ ॥ त्रेरिति किम् । चतुर्ऋचोभवति प्रतिष्ठायै । ता० ब्रा० १३।१।११ ॥ यदृचा पुनरायन्त्यस्मिन् लोके प्रतितिष्ठन्ति । ता० ब्रा० ४।५।५ ॥

## आदेरेमन्नादिषु ॥ ६

एमन् इत्येवमादिषु परत आदेर्लोपो भवति । अर्थात् स्वरस्य ।

अपां त्वेमन् सादयामि । अपां त्वोद्मन् सादयामि । वा० मा० १३।५३ ॥ एमन्नादिराकृतिगणः ।

## आत्मनस्त्राकारे मन्त्रे ॥ ७

आकारे परे आत्मन् इत्येतस्यादेर्लोपो भवति । मन्त्रविषये प्रयोगे ।

अव त्मना भरते केतवेदा अव त्मना भरते फेनमुदन् । ऋ०

११।१०४।३ ॥ अव त्मना धृषता शंबरं भिनत् । ऋ० १।५४।४ ॥ विश्वं तोकमुत त्मना । ऋ० १।४१।६ ॥

आत्मन इति किम् । सं प्रजया समायुषा । ऋ० १।२३।२४ ॥ आकारे इति किम् । बलं दधान आत्मनि । ऋ० ६।११३।१ ॥ यस्मं सर्वस्मादात्मनः । ऋ० १०।१६३।५ ॥ आत्मन्वन्तं पचिषं तौग्र्याय कं । ऋ० १।१८२।५ ॥ मन्त्रे इति किम् । ब्राह्मणे मा भूत् । प्राज्ञेनात्मना संपरिष्वक्तः । बृ० उ० ४।३।२१ ॥ भवत्यात्मना प्र प्रजया पशुभिर्जायते य एवं वेद । ऐ० ब्रा० ४।२३ ॥

## अन्यस्मिन्नपि दृश्यते ॥ ८

आकारादन्यस्मिन्नपि परत आत्मन्इतेरतस्यादिलोपो दृश्यते । प्र यद्वां बद्धस्त्मनि खादति क्षां । ऋ० १।१५८।४ ॥ त्मने तोकाय तनयाय मृळ । ऋ० १।११४।६ ॥ उप त्मन्या वनस्पते । ऋ० १।१८८।१० ॥ उपावसृज त्मन्या समंजन् । ऋ० १०।११०। १० ॥ दृशिग्रहणं प्रयोगानुसारार्थम् ।

## यवौ प्लुतविकारयोः स्वरे ॥ ९

प्लुतविकारो वक्ष्यते । प्लुतविकारयोर्यथासंख्यं यकारवकारौ भवतः । स्वरे परे । अर्थादिदुतोः ।

अग्ना३इ इन्द्रं, अग्ना३यिन्द्रम् । पटा३उ उदकं, पटा ३ वुदकम् । भा० । अग्ना३याशा । पटा३वाशा । का०, सि० ।

प्लुतविकारयोरिति किम् । आयुष्मतीदं परिधत्स्व वासः ।

म० ब्रा० १।१।५ ॥ घोरं सर्पिर्मधूदकं । सा० उ० ५।२।८।२ ॥ कथन्तर्हि, भो३इ इन्द्र, भो३यिन्द्र । हो३इ इन्द्र, हो३यिन्द्र । भा० । सर्व्वोऽयं छान्दसोव्यत्यय इति । भो३यिन्द्रं साम गायति । इत्ययमपि छन्दसि दृष्टस्यानुप्रयोग इति भाष्यम् ।

स्वरे इति किम् । अग्ना३इ । पटा३उ । का० । ज्येष्ठश्च मन्त्रो विश्वचर्षणा३इ । ऋ० १०।५०।४ ॥ कविः कविमियचसि प्रयज्या३उ । ऋ० ६।४८।४ ॥ सवर्णे प्रयोजनम् । श्रुतविकारत्वात् सन्धिर्मा भूदित्याशङ्कानिरासार्थं स्वरग्रहणम् । कथं, अमीध्व-माधिगा३उ इति विब्रूयात् । ऐ० ब्रा० २।७ ॥ वसतीवरीष्वे कधानासु चावेरपोऽध्वर्य्या३उ इति होता अध्वर्य्युं पृच्छति । ऐ० ब्रा० २।२० ॥ संहितायामेव सन्धयोभवन्ति । सा तु पदयोर्व्विभाषितैव । कथं, घृतैर्लव्यूर्तिमुक्षतं । ऋ० ३।६२।१६ ॥ अग्नेर्गव्यूतिर्घृत आ निषत्ता । ऋ० १०।८०।६ ॥ नञा निर्दिष्ट-स्यानित्यत्वात् ।

## लोपस्तयोः शाकल्यस्य ॥ १०

तयोर्यकारवकारयोर्लोपो भवति । शाकल्यस्य मतेन । शाकल्यग्रहणं विकल्पार्थम् ।

आत्मन् हा३ इत्यब्रयत् । तै० ब्रा० २।३।६ ॥ दूराह्वानार्थां श्रुतिः । तस्मै जातायामीमांसन्त गार्हपतो प्रहरामा३ आग्नीध्रा३ आहवनीया३ इति । ता० ब्रा० १२।१० ॥ विचारणार्था श्रुतिः । एवम् । आग्नीध्रा३याहवनीया३यिति ।

## आङनुनासिकः प्रकृत्या ॥ ११

शाकल्यस्येति न स्मर्य्यते । आङ् अनुनासिको भवति । स च प्रकृत्या तिष्ठति । स्वरे परे ।

अमेन्यस्य रजसो यदभ्र आँ अपो वृणाना वितनोति मायिनी । ऋ० ५।४८।१ ॥ पर्षि दीने गभीर आँ उग्रपुत्रे जिघांसतः । ऋ० ८।६७।११ ॥

कथं, इन्द्रो बाहुभ्यामातरत् । भा० । आगन्म वृत्रहंतमं । ऋ० ८।७४।४ ॥ दृषदं जिह्वयावधीत् । ऋ० ८।७२।४ ॥ वत्सं नखिभ्य आनयत् । ऋ० ८।७०।१५ ॥ आयं जना अभिचक्षे जगाम । ऋ० ५।३१।१२ ॥ सर्व्वत्र ह्याकारमवग्रह्य पठन्ति । बहुलाधिकारादियमिष्टसिद्धिरिति भाष्यम् । आङोऽनर्थकस्येति तु वार्त्तिककाराः पठन्ति । विभक्त्यर्थाविद्योतको ह्यनर्थकः । अन्यत्र त्वर्थवानेवासाविति । ङानुबन्धग्रहणान्निरनुबन्धस्य न स्यात् ।

## अन्यत्रापि दृश्यते ॥ १२

अन्यत्राप्यनुनासिकोदृश्यते, स च प्रकृत्या तिष्ठति ।

सत्रा त्वं पुरुष्टुतँ एको वृत्राणि तोशसे । ऋ० ८।१५।११ ॥ त्वं न इंद्रा भरँ ओजः । ऋ० ८।९८।१० ॥ विश्वेदहानि तविषीव उग्रँ ओकः कृणुष्व हरिवो न मर्धीः । ऋ० ७।२५।४ ॥ यथाँ एष वेद निधीनां । ऋ० ८।२९।६ ॥

प्रायेण सन्ध्यक्षरेष्वेवायमनुनासिकोदृश्यते । विसर्गलोपे तु

न भवति । वराहमिंद्र एमुषं । ऋ० ८।७७।१० ॥ इन्द्रः एमुष-मिति छन्दस्त्वाति । य ओजोदातमो मदः । ऋ० ८।९२।१७ ॥ दृष्टिग्रहणं प्रयोगानुसारार्थम् ।

## एदोतावन्तःपादमव्ययवपरे ॥ १३

यश्च वश्च यवौ । यवौ परौ यस्मादसौ यवपरः । न यवपरो-ऽयवपरः । तस्मिन्नयवपरे । अयकारवकारपरे अकारे परतः पदान्ते वर्त्तमानावेकारौकारौ प्रकृत्या तिष्ठतः । तौ चेन्निमित्त-कार्य्यिणौ ऋचः पादमध्ये भवतः । ऋचामेव हि पादव्यवस्था ।

सुजाते अश्वसूनृते । ऋ० ५।७९।१ ॥ ते अग्रेऽश्वमयुञ्जंस्ते अस्मिन् जवमादधुः । मा० ९।७ ॥ अध्वर्यो अद्रिभिः सुतं । ऋ० ९।५१।१ ॥ शिरो अपश्यं पथिभिः सुगेभिः । ऋ० १।१६३।६ ॥ तस्य भ्राता मध्यमो अस्त्यश्नः । ऋ० १।१६४।१ ॥ प्रकृतिभावादेदोत्परः पदान्ते लोपमकारो न प्राप्नोति । निमित्तभावोऽपि विकार एव । कथं, अयं सो अग्निर्यस्मिन्-त्सोममिन्द्रः । मा० १२।४७ ॥ इति वाजसनेयिनां प्रकृति-भावः । स्यादेव । त्रिष्टुप् खल्वेषा ।

एदोताविति किम् । उच्चा व्यख्यद्युवतिः पुनर्भूः । ऋ० १।१२३।२ ॥ आपो अद्यान्वचारिषं । ऋ० १।२३।२३ ॥ अन्तः-पादमिति किम् । कया मती कुत एतास एतेऽर्चंति शुष्मं वृषणो वसूया । ऋ० १।१६५।१ ॥ अत्र खल्वेते इत्येकार-एकस्य पादस्यान्तः अर्चन्तीत्यकारश्चापरस्य पादस्यादिः ।

अतीति किम् । अग्न इत्येतरा गिरः । ऋ० ८।८६।२७ ॥ अयवपरे इति किम् । हिरण्यशृंगोऽयो अस्य पादाः । ऋ० १।१६३।८ ॥ हरिं नवंतेऽव ता उदन्युवः । ऋ० ८।८६।२७ ॥ यवयोः प्रत्येकं प्रतिषेधो न मिलितयोः । तेन, परिष्ठ सुवानो अव्ययं । ऋ० ८।८८।२ ॥ इत्यादयोऽप्यनुसर्त्तव्याः । व्यत्ययाद्वा । कथं, यद्वा दक्षस्य बिभ्युषो अबिभ्यत् । ऋ० ६।२३।२ ॥ आपो भूयिष्ठा इत्येको अब्रवीदग्निर्भूयिष्ठ इत्यन्यो अब्रवीत् । ऋ० १।१६१।८ ॥ ओष्ठ्योऽयं वकार इति ।

## अयमव्रतावक्रमुरव्यादवद्यादवन्त्ववस्युषु च ॥ १४

अयम् अव्रत अवक्रमुः अव्यात् अवद्यात् अवन्तु अवस्यु इत्येतेषु योऽकारस्तस्मिन् परतोऽन्तःपादमेकारौकारौ प्रकृत्या तिष्ठतः । यवपरत्वादारम्भः ।

वृषा सोमो अयं सुतः । ऋ० ५।४०।२ ॥ व्रतैः सीक्षंतो अव्रतं । ऋ० ६।१४।३ ॥ ऋचा ग्रोचन्तः संदहंतो अव्रतान् । ऋ० ८।७३।५ ॥ मा शिवासो अवक्रमुः । सि० । अग्निः प्रथमो वसुभिर्नो अव्यात् । का० । द्रुहो निदो मित्रमहो अवद्यात् । ऋ० ४।४।१५ ॥ ते नो अवन्तु पितरः । का० । कुशिकासो अवस्यवः । ऋ० ३।४२।८ ॥

अन्तःपादमित्येव । ते नोऽवन्तु ते नः पान्तु । मा० ४।११ ॥ कथं, देवानां देवो निधिपा नो अव्यात् । तै० ब्रा० २।८।४ ॥ इति तैत्तिरीयाणां प्रकृतिभावः ।

स्यादेव। कथं तर्हि, व्याघ्रोऽयमग्नौ चरति प्रविष्टः। तै० ब्रा० २।७।१५॥ इति तैत्तिरीयाणां, यथेच्छाम मनसा सो३यमागात्। ऋ० १०।५३।१॥ तं नोऽवन्तु रथतूर्मनीषां। ऋ० १०।७७।८॥ इति बह्वृचानाञ्च प्रकृतिभावो नास्ति। बहुलाधिकारादियमिष्टसिद्धिरिति। एवमन्येऽप्यनुसर्त्तव्याः। बह्वृचैः खल्वेवमादिषु प्रायेण प्रकृतिभावो न क्रियते।

## उरो यजुषि॥ १५

ओकारान्त उरस्शब्दोऽकारे परे प्रकृत्या तिष्ठति। यजुषि विषये।

उरो अन्तरिक्षम्। सि०। कथं, स्वयं दास उरो अंसावपि ग्ध। ऋ० १।१५८।५॥ इति बह्वृचानां प्रकृतिभावः। उरः अंसौ इति हि पदकाराः पठन्ति। पूर्व्वेण स्यादेव। यजुषि पादाभावादनन्तःपादार्थं वचनम्।

केचिदिह संबोधनान्तमुरश्शब्दमिच्छन्ति। उदाहरन्ति च। उरो अन्तरिक्ष सजूर्देवेन। तै० स० १।३।८॥ त्रिष्टुभस्त्वेतामामनन्ति। द्यावापृथिवी उरो अन्तरिक्ष। मा० ४।७॥ इति माध्यन्दिनीयानां प्रकृतिभावोऽप्येतेन व्याख्यातः। विराट् खल्वेषा।

## आपो जुषाणो वृष्णो वर्षिष्ठे॥ १६

एते प्रकृत्या तिष्ठन्ति अकारे परे यजुषि।

आपो अस्मान्मातरः शुन्धयन्तु। मा० ४।२॥ देवीरापो

अपाम्रपाद्य ज्ञग्निर्हविष इन्द्रियावाम्रदिन्तमस्तं देवेभ्यो देवधा-धत्त । तै० स० १।३।१३ ॥ जुषाणो अग्निर्वेतु स्वाहा । मा० ३।१० ॥ जुषाणो अग्निराज्यस्य । सि० । जुषाणो अप्तुराज्यस्य । का० । वृष्णो अंशुभ्यां । सि० । वर्षिष्ठे अधिनाके । तै० स० १।४।४३ ॥ उदाहरणान्तराणि शाखान्तरेषु पर्य्यन्वेष्याणि । एवमन्यत्र ।

कथं, नेमा आपो अनिमिषं चरंती: । ऋ० १।२४।६ ॥ जुषाणो अस्य सख्यं । ऋ० ८।७२।२ ॥ ऋतस्य वृष्णे असुराय मन्म । ऋ० ५।१२।१ ॥ वर्षिष्ठे अधि सानवि । ऋ० ८।३१।५ ॥ इति बह्वृचानां प्रकृतिभाव: । स्यादेव । कथं दिव्या आपो-ऽश्रान्ता आगच्छेयु: । तै० स० ६।१।३ ॥ अमन्त्रत्वात् व्यत्य-याद्वा ।

## अम्बे अम्बाले अम्बिकेपूर्व्वे ॥ १७

यावम्बे अम्बाले इतेऽतावम्बिके इतेऽतस्मात् पूर्व्वौ यजुषि पठितौ, तयोरेकार: प्रकृतया तिष्ठति । अकारे परे ।

अम्बे अम्बाले अम्बिके । सि० । संज्ञापूर्व्वकत्वादस्मादेव निर्द्देशाद्वा अम्बे इत्यत्र ऋस्वोऽम्बार्थानामिति न प्रवर्त्तते । अम्बालादयस्तु विकल्पिताएव । अम्बिकेपूर्व्वे इति किम् । अम्बिकेपरस्य सन्धिरेव । अम्बे अम्बिकेऽम्बालिके । मा० २३।१८ ॥ इहाकारानुवृत्तिर्न प्रयोजयति ।

## अङ्गे च ॥ १८

एकारोऽपीयं सप्तम्यर्थवशात् द्विधा भिद्यते। अङ्गे इत्यत्र यएकारः अङ्गे इतीतस्मिन् परे च यावेकारौकारौ ते यजुषि प्रकृतया तिष्ठन्ति। अकारे परे।

ऐन्द्रः प्राणो अङ्गे अङ्गे निदीध्यदैन्द्र उदानो अङ्गे अङ्गे निधीतः। मा० ६।२०॥ ऐन्द्रः प्राणो अङ्गे अङ्गे निदेध्य-दैन्द्रोऽपानो अङ्गे अङ्गे विबोभुवत्। तै० स० १।३।१०॥ ऐन्द्रः प्राणो अङ्गे अङ्गे अदीध्यत्। ऐन्द्रः प्राणो अङ्गे अङ्गे निदीध्यत्। ऐन्द्रः प्राणो अङ्गे अङ्गे अशोचिषं। का०।

## धकवर्गपरे चानुदात्ते ॥ १९

धे अकार उच्चारणार्थः। धकारपरे कवर्गपरे चानुदात्ते अकारे परत एकारौकारौ यजुषि प्रकृतया तिष्ठतः।

अयं सो अध्वरः। सि०। अयं सो अग्निः। मा० १२।४७॥ अध्वराग्निशब्दावन्तोदात्तौ।

धकवर्गपरे इति किम्। सोऽयमग्निमन्तः। सि०। सोऽय-मग्निः सहस्रियः। का०। इत्यपि काशिकायाम्। अनुदात्ते इति किम्। अश्वोऽग्रे रुद्रे। सि०। अग्रशब्दोऽयमाद्युदात्तः। कथं, सो अध्वरान् सक्रतून् कल्पयाति। तै० स० १।१।१४॥ ऋषीणां पुत्रो अधिराज एषः। तै० स० १।३।७॥ हवि-ष्मान् देवो अध्वरः। तै० स० १।३।१२॥ इति तैत्तिरीयाणां

प्रकृतिभावः । स्वरितो हि सर्व्वत्राकार पठ्यते । उदात्तभिन्नत्वात् छान्दसाद्व्यत्ययाद्वा ।

## अवपथासश्च ॥ २०

चकारेणानुदात्ते इत्यनुकृष्यते । अवपथास् इत्येतस्य योऽनुदात्तोऽकारः तस्मिन् परतो यजुषेरकारौकारौ प्रकृत्या तिष्ठतः ।

त्री रुद्रेभ्यो अवपथाः । सि० । वपेः पञ्चम्यास्थास्, अन् विकरणः अडागमः । निहन्यते खल्वनाख्यातान्तादाख्यातान्तस्यादिः स्वरः । अनुदात्ते इति किम् । यद्रुद्रेभ्योऽवपथाः । सि० । यदादिनिपातयोगे निघातप्रतिषेधादुदात्तोऽयमकार इति ।

## विभाषा गोः ॥ २१

अनुदात्ते इति यजुषीति च निवृत्तम् । गोशब्दस्य यओकारः स प्रकृत्या तिष्ठति वा अकारे परे ।

दण्डा इवेद्गो अजनास आसन् । ऋ० ७।३३।६ ॥ अपशवोवा अन्ये गो अश्वेभ्यः पशवो गोऽश्वाः । का० । गोरिति किम् । अन्येषां विभाषा मा भूत् । अतीतेऽव । शूरो न मित्रा वरुणा गविष्टिषु । ऋ० ५।६३।५ । भाषायामपि । गोअग्रं गोऽग्रमिति मतम् ।

## ईषाअक्षादिषु ॥ २२

अतीति निवृत्तम् । विभाषा न स्मर्य्यते । ईषाअक्षादिषु प्रकृत्या तिष्ठति । अर्थात् पूर्व्वपदम् ।

ईषा अक्षो हिरण्ययः । ऋ० ८।५।२९ ॥ का ईमरे पिशङ्गिला का ईं कुरुपिशङ्गिला* । मा० २३।५५ ॥ ज्या इयं समने पारयंती । ऋ० ६।७५।३ ॥ पूषा अविष्टु माहि नः । ऋ० १०।२६।१ ॥ यथा अङ्गदः । मा० । पथा अगमन् । का० । ईषाअक्षादिराकृतिगणः ।

## न नृपतीवादिषु ॥ २३

नृपतीवादिषु पूर्व्वपदं न प्रकृत्या तिष्ठति ।

उग्रेव रुचा नृपतीव तूर्यै । ऋ० १०।१०६।४ । नृपती इव इति छ्यवग्रहन्ति । नृपतीवादिराकृतिगणः ।

इति चान्द्रकान्त्यां कातन्त्रच्छन्दःप्रक्रियायां सन्धौ प्रथमः पादः ।

* इत्थमेव सिद्धान्तकौमुद्यां पठितम् । भाष्यकारेणापि, अरे हौतः का च पिशङ्गिला—इत्यादि व्याख्यातम् । अध्येतारोऽपि काश्यादिदेश्या इत्थमेव पठन्ति । हस्तलिखिते काश्यादिपुस्तकेऽपीत्थमेव पाठः । मुद्रितपुस्तके कईमित्यादि पाठः प्रामादिक इति लक्ष्यते । तत् पाठस्य प्रामाणिकत्वे छान्दसो ह्रस्व आश्रेयः ।

## प्लुतो वाक्यस्यान्त्यस्वरस्य ॥ २४

वाक्यस्य योऽयमन्त्यः स्वरस्तस्य प्लुतो भवतीत्यधिकृतं वेदितव्यम् । वाक्ये यावन्ति पदानि, तावतामन्त्यस्य स्वरस्य प्लुतो मा भूदिति वाक्यग्रहणम् । वाक्ये यावन्तः स्वरास्तावतां प्लुतनिरासार्थमन्त्यग्रहणं व्यञ्जनान्तस्याप्यन्त्यस्वरस्य प्लुतार्थञ्च । स्वरग्रहणं स्पष्टार्थम् ।

## दूराह्वाने बहुलम् ॥ २५

प्राकृतात् प्रयत्नाद्विशेषेऽनुपादीयमाने यत्र सन्देहो भवति श्रोष्यति न वा श्रोष्यतीति, तदिह दूरमभिप्रेयते ।

दूराह्वाने यद्वाक्यं तस्य बहुलं प्लुतो भवति । सुश्लोकाँ३ सुमङ्गलाँ३ सत्यराजा३न् । तै० ब्रा० १।७।१० ॥ अत्र पदानां प्लुतिः । ब्रह्माँ३ त्वं राजन् ब्रह्मासि । तै० ब्रा० १।७।१० ॥ अत्र पूर्व्वपदमात्रस्य । आत्मन् ह्वा३इत्यह्वयत् । तै० ब्रा० २।३।६ ॥ अत्रान्तपदस्य । भाषायान्त्वन्त्यपदस्यान्त्यस्वरः प्लवते । आगच्छ भो देवदत्ता३ । दूराह्वानं गानरोदनयोरप्युपलक्षणमिच्छन्ति । भाष्यवार्त्तिकयोस्तु नैतच्चिन्तितम् ।

## आमन्त्रिते च ॥ २६

आमन्त्रिते च बहुलं प्लुतो भवति ।

अग्ना३इ पत्नीवा३ः सजूर्देवेन त्वष्ट्रा सोमं पिब । तै० स० १।४।२७ ॥ न च भवति । अग्न आयाहि वीतये । सा० छं० १।१।१।१ ॥ भाषायामपीति केचित् ।

## हैहेप्रयोगे तयोरेव ॥ २७

दूराह्वाने यद्वाक्यं तत्र है हे इत्येतयोः प्रयोगे तयोरेव प्लुतो भवति ।

देवदत्त है३ । देवदत्त हे३ । तयोरित्यनन्त्यार्थम् । है३ देवदत्त । हे३ देवदत्त । इति भाष्यस्थितिः । निगमे त्वत्र प्लुतविकारमधीयते । आत्मन् ह्वा३इत्यह्वयत् । तै० ब्रा० २।३।६ ॥ इति तैत्तिरीयाः । हे शब्दे योऽयमेकारः तस्य प्लुत आकार इकारश्चिरस्क आदेशो भवति । दूराह्वानार्थः प्लुत इति तन्नाप्यम् । तयोरेवेत्यन्यस्य प्लुतो न स्यात् ।

## प्रत्यभिवादेऽस्त्रीशूद्रयोः ॥ २८

अभिवाद्यमानस्याशीःप्रयोगः प्रत्यभिवादः । तत्र यद्वाक्यं तस्यान्त्यस्वरस्य प्लुतो भवति । स्त्रीशूद्रयोरन्यत्र ।

अभिवादये देवदत्तोऽहं भोः । आयुष्मानेधि देवदत्त३ । अस्त्रीशूद्रयोरिति किम् । अभिवादये गार्ग्यहं भोः । आयु-

भतो भव गार्गि। अभिवादये तुषजकोऽहं भोः। कुशलो भव तुषजक। वार्त्तिके त्वसूयकेऽपि प्रतिषेधः। अभिवादये स्थाल्यहं भोः। आयुष्मानेधि स्थालिन्। असूयकस्त्वमसि जाल्म न त्वं प्रत्यभिवादनमर्हसि भिद्यस्व वृषल स्थालिन्निति पुनर्भाष्यस्थितिः।

## भोराजन्यविशां वा ॥ २९

प्रत्यभिवादने यद्वाक्यं तत्र भोःशब्दस्य राजन्यविशोश्चान्त्यस्वरस्य प्लुतो भवति वा।

अभिवादये देवदत्तोऽहं भोः। आयुष्मानेधि देवदत्त भो३ः। आयुष्मानेधि देवदत्त भोः। केचित् प्रत्यभिवादवाक्ये सर्व्वस्यैव नाम्नो भोरादेशं विभाषयेच्छन्तस्तस्यैवामुं प्लुतविकल्पमाहुः। तेषामुदाहरणम्। अभिवादये देवदत्तोऽहं भोः। आयुष्मानेधि भो३ः। आयुष्मानेधि भोः। आयुष्मानेधि देवदत्त३। राजन्यविशोः खल्वपि। अभिवादये इन्द्रवर्म्माहं भोः। आयुष्मानेधीन्द्रवर्म्म३न्। आयुष्मानेधीन्द्रवर्म्मन्। अभिवादये इन्द्रपालितोऽहं भोः। आयुष्मानेधीन्द्रपालित३। आयुष्मानेधीन्द्रपालित।

## गुरोरनन्त्यस्याप्यनृतः पर्य्यायेण ॥ ३०

ऋकारवर्जितस्यान्त्यस्यानन्त्यस्य च गुरोः स्वरस्य पर्य्यायेण प्लुतो भवति। उभयोर्विभाषयोर्मध्ये विधिर्नित्यः।

दे३वदत्त। देवद३त्त। देवदत्त३। गुरोरिति किम्। वकारात् परस्य लघोर्मा भूत्। अनृत इति किम्। कृष्णमि३त्र।

क्षणमिव३। दूराह्वानादौ यः प्लुतोविहितस्तस्यैव स्थानिविशेषोपदेशोऽयमित्येके। दूराह्वानमात्रगोचरोऽयमित्यन्ये। भाष्ये तु नैष विशेषश्चिन्तितः।

## भर्त्सने द्विरुक्तस्य॥ ३१

द्विरुक्तस्य पर्य्यायेण प्लुतो भवति। भर्त्सने गम्यमाने। चौर३ चौर। चौरचौर३। कुशील३ कुशील। कुशील कुशील३। भा०। वृषल३ वृषल। वृषल वृषल३। दस्यो३ दस्यो। दस्योदस्यो३। घातयिष्यामि त्वा, बन्धयिष्यामि त्वा। का०। भर्त्सने इति किम्। देवदत्त देवदत्त त्वरस्वागच्छेति।

## पूर्व्वस्यासूयासम्मतिकोपकुत्सनेष्वन्यतरस्याम्॥ ३२

द्विरुक्तस्य यः पूर्व्वोभागस्तस्यान्त्यस्य स्वरस्य प्लुतो भवति वा। असूयासम्मतिकोपकुत्सनेषु गम्यमानेषु।

असूयायाम्। अभिरूपक३ अभिरूपक रिक्तं ते आभिरूप्यम्। का०। सम्मतौ। अभिरूपक३ अभिरूपक शोभनं खल्वाभिरूप्यं भवतः। कोपे। अविनीतक३ अविनीतक इदानीं ज्ञास्यसि जाल्म। का०। कुत्सने। शाक्तीक३ शाक्तीक रिक्ता ते शक्तिः। का०। कन्ये३ कन्ये। शाक्तीके३ शाक्तीके। भा०। पक्षे, कन्ये कन्ये३। शाक्तीके शाक्तीके३ इति प्लुतान्तमुदाहृतं भाष्ये। जयादित्येन तु माणवक माणवकेत्यप्लुतान्तमिति। केचिदिह विकल्पं नेच्छन्ति।

## हैः पृष्टप्रतिवचने ॥ ३३

पृष्टस्य प्रतिवचने विषये हैः प्लुतो भवति वा ।

अकार्षीः कटं देवदत्तेति प्रश्नः । तस्य प्रतिवचनम् । अकार्षं हि३ । अकार्षं हि । का० । पृष्टप्रतिवचने इति किम् । कटं करिष्यति हि । का० । वृषो वहति रथं हि । हैरिति किम् । करोमि ननु । का० ॥

## निगृह्यानुयोगे च ॥ ३४

उपपत्त्या स्वमतात् प्रच्यावनमिह निग्रहः । अनुयोगस्तस्यैव मतस्याविष्करणम् । निगृह्यानुयोगे यद्वाक्यं तस्यान्त्यस्वरस्य प्लुतो भवति वा ।

अनित्यः शब्द इत्यात्थ३ । अनित्यः शब्दइत्यात्थ । का० । अनित्यः शब्द इत्येवंवादिनमुपपत्तिभिः स्वमतात् प्रच्याव्य साभ्यसूयमिव किलैवमनुयुङ्क्ते । अद्यामावस्येत्यात्थ३ । अद्यामावस्येत्यात्थ । का० । अद्यामावस्येत्येवंवादिनं युक्त्या स्वमतात् प्रच्याव्य साभ्यसूयमिव खल्वेवमनुयुङ्क्ते ।

## साकाङ्क्षस्याङ्गयुक्तस्याख्यातस्य ॥ ३५

अन्यतरस्यामिति न स्मर्य्यते । भर्त्सनमन्वनुवर्त्तते । अङ्ग इत्यनेन युक्तस्य साकाङ्क्षस्याख्यातस्य योऽयमन्त्यः स्वरस्तस्य प्लुतो भवति । भर्त्सने गम्यमाने ।

अङ्ग कूज३ ; अङ्ग व्याहर३ ; इदानीं ज्ञास्यसि जाल्म। का०। कूजनादिफलमधुनैव ज्ञास्यसीत्यर्थः। साकाङ्क्षस्येति किम्। अङ्ग पच। का०। नैतदपरमाकाङ्क्षति। अङ्गयुक्तस्येति किम्। तावत् क्रीड़ ; अञ्जसा ज्ञास्यसि जाल्म। आख्यातस्येति किम्। अङ्ग देवदत्त मिथ्या वदसि। का०। भर्त्सने इत्येव। अङ्गाधीष्व भक्तं ते दास्यामि। का०।

## आचारभेदाशीःप्रैषेषु च ॥ ३६

अङ्गयुक्तस्येति भर्त्सने इति च न स्मर्यते। आचारोल्लङ्घनमाचारभेदः। इष्टार्थस्याशंसनमाशीः। शब्देन व्यापारणं प्रैषः। एतेष्वर्थेषु गम्यमानेषु साकाङ्क्षस्याख्यातस्य योऽन्त्यः स्वरस्तस्य प्लुतो भवति।

आचारभेदे तावत्। स्वयं ह रथेन याति३ उपाध्यायं पदातिं गमयति। सि०। स्वयमोदनं ह भुङ्क्ते३ उपाध्यायं सक्तून् पाययति। पूर्व्वं खल्वत्राख्यातमुत्तरमाकाङ्क्षति। आशिषि। सुतांश्च लप्सीष्ट३ धनञ्च तात। छन्दोऽध्येषीष्ट३ व्याकरणं च भद्र। का०। प्रैषे। कटं कुरु३ ग्रामं च गच्छ। यवान् लुनीहि३ सक्तूंश्च पिब।

एष्विति किम्। वेदञ्चाधीते व्रतं चाचरति। उपाध्यायं रथेन गमयति स्वयं पदातिर्व्रजति। साकाङ्क्षस्येत्येव। दीर्घं ते आयुरस्तु। का०। अग्नीदग्नीन् विहर। सि०। आचारभेदे त्वाख्यातं नित्यमितरदाकाङ्क्षति।

## चिदित्युपमार्थे प्रयुज्यमाने ॥ ३७

उपमार्थश्चिदित्ययं निपातो यस्मिन् वाक्ये प्रयुज्यते तस्य वाक्यस्य योऽन्त्यः स्वरस्तस्य प्लुतो भवति ।

अग्निचिद्भायाइत् । राजचिद्भायाइत् । का० । अग्निरिव भायात्, राजेव भायादित्यर्थः । चितीति किम् । अग्निरिव भायात् । उपमार्थे इति किम् । कथंचिदाहुः । का० । प्रयुज्यमाने इति किम् । अग्निर्माणवको भायात् । का० ।

## प्रतिश्रुतौ च ॥ ३८

प्रतिश्रुतिरभ्युपगमः प्रतिज्ञा श्रवणाभिमुख्यं च । प्रतिश्रुतिविषये यद्वाक्यं तस्यान्त्यस्वरस्य प्लुतो भवति ।

अभ्युपगमे । गां मह्यं देहि भोः । हन्त तुभ्यं ददामि३ । प्रतिज्ञायाम् । नित्यः शब्दो भवितुमर्हति३ । का० । श्रवणाभिमुख्ये । देवदत्त भोः किमात्थ३ । का० । देवदत्तेन यदुक्तं तदसम्यक् श्रुत्वा किलैवमाह । श्रवणाभिमुख्यं खल्वत्र गम्यते ।

## विचार्य्यमाणे सर्व्वेषाम् ॥ ३९

प्रमाणैरर्थपरीक्षणं विचारः । योऽर्थः परीक्ष्यते सोऽयं विचार्य्यमाणः । इह तु विचारस्याङ्गभूतो विमर्शो येन वाक्येन प्रदर्श्यते, तद्वाक्यं विचार्य्यमाणविषयमित्युच्यते । विमृष्टे हि विषये विचारः प्रवर्त्तते । विचार्य्यमाणविषये यावन्ति वाक्यानि प्रयुज्यन्ते तावतामन्त्यस्वरस्य प्लुतो भवति ।

तिष्ठेद्यूपा३इ अनुप्रहरे३दित्याहुः। ऐ० ब्रा० २।३॥ यूपे तिष्ठेदनुप्रहरेत् न वेति विचार्य्यते। होतव्यं दीक्षितस्य गृहा३इ। का०। होतव्यं न होतव्यमिति विचार्य्यते। सर्व्वत्र प्लुतविकारः। तथा। अधः स्विदासी३दुपरि स्विदासी३त्। ऋ० १०।१२९।५॥ अधश्चासीदुपरि वेति विचार्य्यते। एवं, होतव्यमग्निहोत्रा३ न होतव्या३मिति। तै० ब्रा० १।१।६॥ प्राश्या३ न प्राश्या३मिति। तै० ब्रा० १।३।१०॥ प्र चातुर्मास्य-याजी मीयता३ न प्रमीयता३ इति। तै० ब्रा० १।४।१०॥ उपस्थेयोऽग्नी३र्नोपस्थेया३ इत्याहुः। तै० स० १।५।८॥ भाषायान्त्वेवम्भूतविषये पूर्व्वं प्लवते।

## प्रश्नाख्यानयोः पदानाम्॥ ४०

प्रश्ने आख्याने च यद्वाक्यं वर्त्तते, तस्य सर्व्वेषां पदानामन्त्य-स्वरस्य प्लुतो भवति।

प्रश्ने। अगम३ः पूर्व्वा३न् ग्रामा३न्। आख्याने। अगम३ पूर्व्वा३न् ग्रामा३न्। कथं, उताविद्वानमुं लोकं प्रेत्य कश्चन गच्छती३। तै० उ० २।६॥ वेत्थ यथा पुनरावर्त्तन्ता३इति, वेत्थ पथोर्देवयानस्य पितृयाणस्य च व्यावर्त्तना३इति। छा० उ० ५।३।२॥ इत्येवमादौ पदानां प्लुतो नास्ति। भूयानेवमादिः प्लुतव्यत्ययो निगमे इति।

## ओमारम्भे ॥ ४१

आरम्भविषये य ओम् इतिशब्दस्तस्य प्लुतो भवति। इच्छार्थात् स्वरएव प्लवते। ब्राह्मणः प्रणवं कुर्य्यादादावित्यादिना योऽयमोङ्कारो ब्राह्मणोऽनवयवएव सम्बन्धयनारम्भे प्रयुज्यते, सोऽयमारम्भविषय इत्युच्यते। यस्तु वाक्यावयव एव पठ्यते, नासावारम्भविषयः।

ओ३म् अग्निमीळे पुरोहितं। ऋ० १।१।१ ॥ आरम्भे इति किम्। ओमित्येतदक्षरमुद्गीथमुपासीत। छा० उ० १।१।१ ॥ ओमित्येतदक्षरमिदं सर्व्वं। मा० उ० १ ॥

## बहुलमंगीकारे ॥ ४२

अङ्गीकारेऽर्थे योऽयमोङ्कारस्तस्य बहुलं प्लुतो भवति।

यद्वै देवानां नेति तदेषामो३मिति। ऐ० ब्रा० १।३।५ ॥ न च भवति। ओमिति वै दैवं तथेति मानुषं। ऐ० ब्रा० ७।३।६ ॥ यद्वै नेत्यृचि ओमिति तत्। श० ब्रा० १।४।१।३ ॥ यद्धि किं चानुजानात्योमित्येव तदाह। छा० उ० १।१।८ ॥

## यज्ञकर्म्मण्यावहश्रौषड्वौषड्ब्रूहिप्रेष्याणामादेः ॥ ४३

आवह श्रौषट् वौषट् ब्रूहि प्रेष्य इत्येतेषामादेः स्वरस्य प्लुतोभवति। यज्ञकर्म्मणि विषये। यज्ञकर्म्मणि खल्वेतानि तत्र तत्र विहितानि कल्पसूत्रादिषु।

अग्निमा३वह। सोमस्याग्ने वीही वौ३षट्। बह्वृचाः किल सर्व्वासां याज्यानामन्ते वौषट् इति प्रयुञ्जते प्लावयन्ति च तस्यादिस्वरम्। अग्नयेऽनुब्रू३हि। अग्नये गोमयान् प्रे३ष्य। बहुलाधिकारात्, आवह देवान् यजमानाय। आश्व० श्रौ० १।३।६ इत्यत्र न प्लवते। सांख्यायनश्रौतसूत्रभाष्ये तु, देवशब्देनात्र यागाभावान्न प्लुतिरित्युक्तम्।

यज्ञकर्म्मणीति किम्। अग्निमावह। अस्तु श्रौषट्। सोमस्याग्ने वीही वौषट्। अग्नयेऽनुब्रूहि। अग्नये गोमयान् प्रेष्य। तथा। अस्तु श्रौषट् पुरो अग्निं। ऋ० १।१३९।१॥ स्वाध्यायकाले मा भूत्॥

## परस्य च प्रेषणेऽग्नीधः॥ ४४

अग्निमिन्धे इत्यग्नीध ऋत्विग्विशेषः। आग्नीध्र इति चोच्यते। तस्य प्रेषणे विषये आदेः स्वरस्य ततः परस्य च स्वरस्य प्लुतो भवति। तेनोभयं प्लवते।

ओ३ श्रा३ वय। आ३ श्रा३ वय। भा०। इत्यमेवैतदुदाहृतं भाष्ये। केचिदुभयत्रादिस्वरमेव प्लावयन्ति। प्रयुञ्जते च तथैव तत्रभवन्तो याज्ञिकाः। तथा। उद्धर३ उद्धर। आहर३ आहर। भा०। अभिहर३ अभिहर। का०। बहुलाधिकारात् प्लुतव्यत्ययः।

प्रेषणे इति किम्। अस्तु श्रौ३षट्। इत्यनुवचने मा भूत्। अग्नीध इति किम्। अवेरपोऽध्वर्य्या३उ सोमयागे प्रातः-

सवने वसतीवरीग्रहणकाले अध्वर्युं प्रति होतुः प्रैषोऽयम् । अग्नये समिध्यमानायानुब्रू३हि । तै० ब्रा० ३।२।७ ॥ अनुब्रूहीति मन्त्रपाठः । अयमपि होतुः प्रैषः । अभिषोतार एतदाह्वयत ग्रावस्तुतमेहि यजमान । श्रौ० प० नि० ३७५। ज्योतिष्टोमे माध्यन्दिने सवने ग्रावस्तुत्प्रैषोऽयम् ।

## ये यजामहेपरस्य ॥ ४५

ये इति लुप्तविभक्तिकं पदम् । यजामहे इत्येतत् परं यस्मादिति विग्रहः । यजामहेपरस्य ये इत्येतस्य प्लुतो भवति । यज्ञकर्मणि । इच्छार्थात् स्वरएव प्लवते ।

ये३ यजामहे । बह्वृचाः किलानुयाजवर्जितानां याज्यानामादौ ये यजामहे इति प्रयुञ्जते । प्लावयन्ति च येशब्दम् । तदिदमागूरित्याचक्षते ।

ये इति किम् । द्रविणोदो यजामहे । ऋ० १।१५।१० ॥ यजामहेपरस्येति किम् । ये देवासो दिव्येकादश स्थ । ऋ० १।१३९।११ ॥ ये बर्हिषो नमोवृक्तिं न जग्मुः । तै० स० १।८।२१ ॥ आगूरेव वैवं परिचायते । ये यजामह: प्लुतादिः पुरस्ताद्याज्यानाम् । सा० १।२।२ ॥ इति च सांख्यायनीये काण्डे । यज्ञकर्मणीत्येव । स्वाध्यायकाले तु न प्लवते । ये यजामहे । ये यजामहे इति पञ्चाक्षरं । तै० स० १।६।११ ॥

# याज्यानामन्तस्य ॥ ४६

अन्त्यस्वरस्येति वर्त्तते । याज्या नाम याज्याकाण्डे पठ्य-मानाहविस्त्यागार्थाऋचः प्रयोगकाले होत्रा पठ्यन्ते । याज्यानां योऽयमन्त्योऽन्त्यस्वरस्तस्य प्लुतो भवति । यज्ञकर्म्मणि ।

जुषाणो अग्निराज्यस्य हविषो वेतू३ । आश्व० श्रौ० १।५।२८ ॥ पूर्व्वस्याज्यभागस्य याज्येयम् । जुषाणः सोम आज्यस्य हविषो वेतू३ । आश्व० श्रौ० १।५।२८ ॥ इयमुत्त-रस्याज्यभागस्य । वेतु इति मन्त्रपाठः । जिह्वामग्ने चकृषे हव्यवाहां३ । ऋ० १०।८।६ ॥ हव्यवाहमिति मन्त्रपाठः । इयं दर्शपूर्णमासयोराग्नेयस्य । सहस्तमा सहसा वाजयंता३ । ऋ० ६।६०।१ ॥ इयमैन्द्राग्नस्य । समिधः समिधो अग्न आज्यस्य व्यन्तू३ । मा० भा० १।७।१ ॥ इयं प्रथमस्य प्रयाजस्य । एवमन्यत्रापि ।

याज्यानामिति किम् । अन्येषां मा भूत् । चिकित्वाँ अनुमन्यतां । तै० स० ३।१।४ ॥ सोऽयं पशूपाकरणमन्त्रः । अन्तस्येति किम् । याज्या नाम ऋचो वाक्यसमुदायरूपाः, तत्र यावन्ति वाक्यानि तावतामन्त्यस्वरस्य प्लुतः प्राप्नोति, इष्यते त्वन्तस्य । तदेतदर्थमन्तग्रहणम् । केचिदृक्समुदायो याज्यास्तत्र प्रत्यृचं प्लुतः प्राप्नोति ऋक्समुदायस्य प्लुतार्थमन्तग्रहणमित्याहुः । याज्ञिकास्त्वत्रभवन्तः प्रत्यृचमन्त्यस्वरं प्लावयन्ति । यज्ञ-कर्म्मणीत्येव । स्वाध्यायकाले तु न प्लवते ।

**पूर्व्वयोः सन्ध्यक्षरयोरप्रगृह्ययोः प्लुताकारपूर्वाविदु-तावामन्त्रितप्रश्नान्ताभिपूजितविचार्य्यमाण-प्रत्यभिवादयाज्यान्तेषु पाणिनेः ॥ ४७**

अप्रगृह्ययोः पूर्व्वयोः सन्ध्यक्षरयोः स्थाने प्लुताकारपूर्व्वा-विदुतावादिश्येते । आमन्त्रितादिषु विषये । पाणिनेराचार्य्यस्य मतेन । सन्ध्यक्षरयोरेकं पूर्व्वमैकारमपेक्ष्यान्यदौकारमपेक्ष्य । ययोः सन्ध्यक्षरयोः सन्धिर्निषिद्धस्ते प्रगृह्ये विपरीते त्वप्रगृह्ये । तेन, एकारस्य आ३इ ओकारस्य आ३उ इति प्लुतविकारः सम्पद्यते । सन्ध्यक्षरयोः किल द्वावंशावाचक्षते । पूर्व्वोऽंशो-ऽकारः परस्त्वेदुतौ । तत्राकारः प्लवते ।

आमन्त्रिते । पात्नीवन्तं ग्रहं गृह्णाम्यग्ना३इ पत्नीवा३ः सजूर्देवेन त्वष्ट्रा सोमं पिब । तै० स० १।४।२७ ॥ शमीध्व-मभिगा३उ इति त्रिब्रूयात् । ऐ० ब्रा० १।७ ॥ वसतीवरी-ष्वेकधानासु चाविरपोऽध्वर्या३उ इति होता अध्वर्य्युं पृच्छति । ऐ० ब्रा० २।२० । प्रश्नान्ते । वेत्थ यथाऽयं लोको न संपूर्यता३ इति । छा० उ० ५।३।२ । आगमः३ः पूर्वा३न् ग्रामा३-नग्निभूता३इ । अगमः३ः पूर्वा३न् ग्रामा३न् पटा३उ । भा० । अभिपूजिते । भद्रं करोषि अग्निभूता३इ । भद्रं करोषि पटा३ उ । का० । सिद्धोऽसि माणवक अग्निभूता३इ । सिद्धोऽसि माणवक पटा३उ । भा० । विचार्य्यमाणे । होतव्यं दीक्षि-तस्य गृहा३इ । तिष्ठेद्यूपा३इ । ऐ० ब्रा० २ । ४ । दीक्षि-

तस्य गृहे होतव्यं न होतव्यमिति यूपे तिष्ठेन्न तिष्ठेदिति विचार्यते । प्रत्यभिवादे । आयुष्मानेधि अग्निभूता३इ । आयुष्मानेधि पटा३उ । का० । याज्यान्ते । स्तोमैर्विधेमाग्नया३इ । ऋ० ८।४३।११ । अग्नये इति मन्त्रपाठः । प्रातःसवने प्रस्थितयाज्येयम् । कविः कविमियक्षसि प्रयज्या३उ । ऋ० ६।४९।४ । प्रयज्यो इति मन्त्रपाठः ।

कथं, आहो विद्वानमुं लोकं प्रेत्य कश्चित् समश्नुता३उ । तै० उ० २।६ । नेयं संध्यक्षरस्य प्लुतिः, किंतु समश्नुते उ इति स्थिते अयादेशे यलोपे चाकारः प्लवते ।

एष्विति किम् । विष्णुभूते विष्णुभूते३ घातयिष्यामि त्वाम् । का० । अप्रगृह्ययोरिति किम् । अधिश्रियं शुक्रपिशं दधाने३ । ऋ० १०।११०।६ । पदान्तस्य प्रगृह्यत्वादप्रगृह्यस्यापि पदान्तस्यैव ग्रहणम् । तेनापदान्ते यथाप्राप्तएव प्लुतः । तिष्ठेद्यूपा३इ अनुप्रहरे३दित्याहुः । ऐ० ब्रा० २।४ । तदाहुः सर्पे३त् न सर्पे३दिति । ऐ० ब्रा० २।४० । एवमन्यत्रापि । भाषायामपि प्रश्नान्तादिष्विति मतम् । गुणविधिरयम् ।

## चतुर्मात्रः परयोः ॥ ४८

परयोः संध्यक्षरयोः चतुर्मात्रः प्लुतोभवति । पाणिनेराचार्यस्य मतेन । एकं परमेकारमपेक्ष्यान्यदोकारमपेक्ष्य । इच्छाप्यन्तिमांशस्य प्लुतौ पूर्वेणांशेन चतुर्मात्रं संध्यक्षरं संपद्यते । ऐ४तिकायन । औ४पगव ।

## याज्यान्ते तालव्यौष्ठ्ययोः सांख्यायनस्य ॥ ४९

याज्यान्ते स्थितयोरप्रगृह्ययोस्तालव्ययोरोष्ठ्ययोश्च संध्यक्षरयोः स्थाने प्लुताकारपूर्वाविदुतावादिश्येते । सांख्यायनस्याचार्य्यस्य मतेन । तालव्यत्वमोष्ठ्यत्वं चाभिप्रेत्य द्विवचनम् । तेन, तालव्ययोरेकारैकारयोः स्थाने प्लुताकारपूर्वइकारः, ओष्ठ्ययोरोकारौकारयोः स्थाने प्लुताकारपूर्व उकारो भवतीत्यर्थः सम्पद्यते ।

तत्र, एकारौकारयोरुदाहृतम् । ऐकारौकारयोः खल्वपि । आदिद्दसूनि प्र च वाचास्मा३इ । इन्दुं समह्यन् पीतये समस्मा३इ । सा० भा० १।२।४ ॥ अस्मै इति मन्त्रपाठः । समुद्रेष्ठौ दधातु ना३उ । सा० भा० १।२।५ ॥ नौ इति मन्त्रपाठः । सहस्रस्थूणं बिभृतः सह द्वा३उ । ऋ० ५।६२।६ ॥ द्वौ इति मन्त्रपाठः ।

इहाप्रगृह्यत्वविशेषणमैकारौकारयोरर्थवत् । शिष्टयोः प्रगृह्यत्वासम्भवात् । अथामन्त्रितजः खल्वोकारो याज्यान्ते, स तु प्रगृह्य एव । सत्यम् । किन्तु बाह्वृचानामप्रगृह्यस्तदर्थं वचनमित्यानन्तीयाः ।

## प्रणवोऽन्त्यस्वरादेः सान्निध्यादौ यथोपदिष्टम् ॥ ५०

क एष प्रणवो नाम । पादस्य वा अर्धर्चस्य वा अन्त्यमक्षरमुपसंहृत्य तदाद्यक्षरशेषस्य स्थाने त्रिमात्रमोकारमोंकारं वा विदधति, तं प्रणवमित्याचक्षते इति भाष्यस्थितिः । उत्तमस्य च

छन्दोमानसगोर्ध्वमादिव्यञ्जनात् स्थान ओकारः प्लुतस्त्रिमात्रः शुद्धो मकारान्तोवा तं प्रणवइत्याचक्षते इति च सांख्यायनीये कल्पे। ऋगन्ते भवस्य केवलस्य सव्यञ्जनस्य वा स्वरस्य छन्दोमानमिति तान्त्रिकी संज्ञा।

यज्ञकर्म्मणि विषये सामिधेन्यादेर्र्ध्योऽयमन्त्यस्वरादिरवयवस्तस्य स्थाने प्लुतः प्रणव आदेष्टव्यः। यथोपदिष्टं कल्पादिषु; तमनतिक्रम्येत्यर्थः।

सामिधेन्याम्। नि होता सत्सि बर्हिषो३म्। ऋ० ६। १६।१०॥ बर्हिषीति मन्त्रपाठः। देवाञ्जिगाति सुम्नयो३म्। ऋ० ३।२७।२॥ सुम्नयुरिति मन्त्रपाठः। उत्तमस्य चेति चशब्दात् क्वचिदुत्तमाद्दगक्षरादित्यानन्तीर्याः। तत्रोदाहरणं तेषामेव। भवतं दाशुषे मयः ओ३म्। सा० भा० १।१।१८॥

कल्पोपदिष्टे त्ववसाने चतुर्मात्रं प्रणवं याज्ञिकाः कुर्व्वन्ति। याज्ञिकी हि प्लुतिश्चतुर्मात्रेत्याचक्षते। या त्वाम्नायपठिता व्याकरणानुशिष्टा च सा यज्ञेऽपि प्रयुज्यमाना त्रिमात्रैव भवति। यथा, अधः स्विदासी३ दिति वाचःस्तोमे प्रयुज्यमामा त्रिमात्रैव प्रयुज्यते। एवमन्यत्र।

यथोपदिष्टमित्यनेनादेर्व्यवस्थावाचित्वं दर्शयति। तेन पुरोनुवाक्यादावपि। तत्र पुरोनुवाक्यायाम्। समिद्धः शुक्र-आहुतो३म्। ऋ० ६।१६।३४॥ आहुतः इति मन्त्रपाठः। पूर्व्वस्याज्यभागस्य पुरोनुवाक्येयम्। अनुशंसने। आ नः शृण्वन्नूतिभिः सीद सादनो३म्। ऋ० २।२३।१॥ सादनमिति

मन्त्रपाठः । ज्योतिष्टोमे प्रवर्ग्यकर्म्मणि होतुरनुशंसनमिदम् । शस्त्रे । यज्ञरित्रे यज्ञरित्रो३म् । ऐरयेथामैरयेथो३म् । आ० श्रौ० सू० ७।११।१२ ॥ सत्रे अह्न उत्तमे शस्त्रे परिधानीयाया उत्तमे वचने उत्तमं चतुरक्षरं द्विरभ्यस्यान्ते किलैवं प्लुतः प्रणवश्चादिश्यते । एवन्योऽप्यस्य विषयः कल्पसूत्रादिभ्यो बुभुत्सितव्यः ।

## अन्यत्रापि दृश्यते ॥ ५१

यत्र यत्र प्लुतो विहितस्तदन्यत्रापि प्लुतो दृश्यते । दृषं जरित्रे नद्यो३न पीपेः । ऋ० ४।१६।२१ ॥ सुप्राव्ये३ यजमानाय सुन्वते । ऋ० १०।१२५।२ ॥ निंसानं जुह्वो३ मुखे । ऋ० ८।४३।१० ॥ अगृभ्णू३षु शचीपते । ऋ० ८।६१।५ ॥

मच्चित्युकारः प्लवते सर्व्वत्राप्यपदान्तभाक् ।
सुता याहीत्यतोऽन्येषु पदेष्वच्छेति विग्रहे ॥

इत्येवमादिप्रातिशाख्यादिविहितानामाम्नायपरिपठितानाञ्च प्लुतानामुपसंग्रहार्थमिदम् ।

इति चान्द्रकान्त्यां कातन्त्रच्छन्दःप्रक्रियायां सन्धौ द्वितीयः पादः ।

## स्वरान्तडंढयोर्ळ्ळ्हौ बह्वृचानाम् ॥ १

बह्वृचानां समाम्नाये स्वरद्वयमध्यवर्त्तिनोर्डकारढकारयोः स्थाने ळकारळ्हकारावादिश्येते यथासंख्यम् ।

तमीळत प्रथमं यज्ञसाधं । ऋ० १।८६।३ ॥ दृळ्हस्य चिद्गोमतो वि व्रजस्य । ऋ० ६।६२।११ ॥ यदाग्नावैष्णवं पुरोळाशं निर्वपन्त्यन्तत एव तद्देवानृध्नुवन्ति । ऐ० ब्रा० १।१।१ ॥

स्वरान्तरिति किम् । त्वं मित्रो भवसि दस्म ईड्यः । ऋ० २।१।४ ॥ ढडयोरिति किम् । गंभीराँ उदधीँरिव । ऋ० ३।४५।३ ॥ बह्वृचानामिति किम् । षड्विमा ऋषयो-देवजा इति । अथ० ८।८।१६ ॥ ग्रन्थींश्चकार ते दृढान् । अथ० ८।३।३ ॥ इत्याथर्व्वणिकाः । इडायाः पदे घृतवति स्वाहा । तै० स० १।२।५ ॥ इति तैत्तिरीयाः । अग्ने मृड महाँ असि । सा० छ० १।१।३।३ ॥ दृढा चिदारुजे वसु । सा० उ० १।१।१२।२ ॥ इति छन्दोगाः । बह्वृचास्तु, दृळ्हा चिदारुजे वसु । ऋ० ४।३१।२ ॥ इत्यधीयते ।

## स्थमात्स्तुतिस्तुत्यवीरेषु सधः सहस्य ॥ २

बह्वृचानामिति न स्मर्य्यते । तेन सर्व्वेषामेवायं विधिर्न बह्वृचानामेव । मादिति व्यञ्जनान्तमनुक्रियते । तेन मादयतेः

क्विबन्तस्यान्यस्य वा यत् मादिति रूपं, तस्मिन्नपि परे वचनं प्रवर्त्तते। स्थ मात् स्तुति स्तुत्य वीर इत्येतेषु परतः सहशब्दस्य स्थाने सध इत्ययमादेशो भवति।

अग्ने त्री ते वाजिना त्री सधस्था। तै॰ सं॰ ३।२।११॥ परमाच्चित् सधस्थात्। ऋ॰ ८।११।७॥ तदित् सधस्थमभि चारु दीधय। ऋ॰ १०।३२।४॥ महान्त्सधस्थे ध्रुव आ निषत्तः। मा॰ १८।५३॥ एतं सधस्थाः परि वो ददामि। अथ॰ ६।१२३।१॥ रेवतीर्नः सधमादे। सा॰ छ॰ २।२।१।९॥ इन्द्र त्वास्मिन्त्सधमादे। ऋ॰ ८।२।३॥ आ नो बर्हिः सधमादे बृहद्दिवि। ऋ॰ १०।३५।१०॥ इन्द्राविष्णू सधमादो वहंतु। ऋ॰ ६।६९।४॥ तस्थुर्गृणंतः सधमाद्यासः। ऋ॰ १०।१०४।४॥ आ योऽनयत् सधमा आर्य्यस्य। ऋ॰ ७।१८।७। सधमादः इति प्राप्ते वस्नादित्वात् दलोपः। अश्वानां सधस्तुति। ऋ॰ ५।१८।५॥ यामधाय्ये सधस्तुतिं। ऋ॰ १।१७।९॥ सुतं सोमं सधस्तुती। ऋ॰ ८।३८।४॥ सधस्तुत्याय सूरिषु। ऋ॰ ८।२६।१॥ त्वया यत् स्तवंते सधवीर वीराः। ऋ॰ ६।२६।७॥ इह मादस्थयोरिति पाणिनीया स्मृतिः। बहुलाधिकारात्, धाता रयिं सहवीरं तुरासः। ऋ॰ ३।५४।१२॥ इत्यादयोऽप्यनुसर्त्तव्याः।

एष्विति किम्। ता अपश्यं सहगोपाश्चरन्तीः। ऋ॰ १०।२७।८॥ सहस्तोमाः सहच्छन्दस आवृतः सहप्रमा ऋषयः सप्त दैव्याः। ऋ॰ १०।१३०।७॥ सहस्थेति किम्। ये देवासो दिव्येकादश स्थ।

## नात्तुः पदान्तात् से बहुलम् ॥ ३

सकारे परतः पदान्तान्नकारात् परस्तकारागमो बहुलं भवति। उदनुबन्ध आगमस्य लिङ्गम्। जायेदस्तं मघवन्त्सेदु योनिः। ऋ० ३।५३।४ ॥ शर्म्मन्त्स्याम तव सप्रथस्तमे। ऋ० १।९४।१३ ॥ तं देवा हस्तान्त्सꣳरभ्यैच्छन्। तै० स० ६।२।४ ॥ न च भवति। आप्याययास्मान्त्सखीन् सन्या मेधया। ऐ० ब्रा० १।४।८ ॥ इदमहं मनुष्यो मनुष्यान् सह प्रजया। तै० स० १।३।४ ॥

नकारादिति किम्। विड्राट् सम्राड्विभ्वीः प्रभ्वीः। ऋ० १।१८८।५ ॥ पदान्तादिति किम्। सो अर्केण विबबाधे तमांसि। ऋ० १०।६८।८ ॥ से इति किम्। पशून् विश्वान्त्समानजे। ऋ० १।१८८।८ ॥

## तस्मिन्ननुस्वारस्तस्य छन्दोगानाम् ॥ ४

तस्मिंस्तकारे परतस्तस्य नकारस्यानुस्वारो भवति। छन्दोगानां समाम्नाये। अक्रांत्समुद्रः प्रथमे विधर्म्मन्। सा० उ० ५।२।१।१ ॥ पवस्व सोम महांत्समुद्रः। सा० उ० ५।१।१७।१ ॥ छन्दोगानामित्येव। बह्वृचास्तु, अक्रान्त्समुद्रः। ऋ० ९।९७।४० ॥ महान्त्समुद्रः। ऋ० ९।१०९।४ ॥ इत्यधीयते ॥

## अन्यत्रापि दृश्यते ॥ ५

छन्दोगानामिति न स्मर्य्यते। अन्यत्रापि पदान्तस्य नकारस्यानुस्वारो दृश्यते। य ईंखयंति पर्व्वतां तिरः समुद्रमर्णवं।

ऋ० १।१६।७ ॥ पर्व्वतान् तिरः इत्यवग्रहे पठ्यते । तथा ।
तान् क्रिमीं जम्भयामसि । अथ० ५।२३।५ ॥ इग्रिग्रहणं
प्रयोगानुसारार्थम् ।

## अनुस्वारस्य ং रेफोष्मणोः ॥ ६

पुनरनुस्वारग्रहणं सामान्यार्थम् । रेफोष्मणोः परतोऽनुस्वारस्य
स्थाने ং इत्ययमनुनासिकादेशो भवति । स घा तं वृषण ং
रथं । सा० छ० ५।१।४।६ ॥ परिलिखितং रक्षः परिलिखिता-
अरातयइदमहং रक्षसोग्रीवा अपि कृन्तामि । तै० स० १।२।५ ॥
रायः समुद्रां ংश्चतुरो अस्मभ्यং सोम मिश्वतः । सा० उ०
२।२।१४।३ ॥ येन ज्योतींংष्यायवे । सा० उ० २।२।१८।२ ॥
हरিংहिन्वंत्यद्रिभिः । सा० उ० ३।१।४।६ ॥ पूष्णोরং ह्या-
अपामोषधीनাংरोहिष्यै । तै० स० १।३।१० ॥ ओषधे
त्रायस्वैनং स्वधिते मैनং हिংसीः । तै० स० १।३।६ ॥
वातরংहा भव वाजिन्युजरमान । मा० ६।८ ॥ वाचस्पति-
र्नोऽअद्य वाजংस्वदतु । का० १०।१ ॥ नात्र पदान्तत्वनियमः ।
केचिद्रेफे न कुर्व्वन्ति । बह्वृचा आथर्व्वणिकाश्च प्रायोऽनुस्वारम-
धीयते । बहुलाधिकारादिष्टसिद्धिरिति ।

## अनुस्वारपूर्व्वाः शषसाश्चटतवर्गाणां प्रथम-द्वितीययोर्नस्यान्तस्यचि ॥ ७

चवर्गटवर्गतवर्गाणां प्रथमद्वितीययोर्व्वर्णयोः परतः पदान्तस्य
नकारस्य स्थाने अनुस्वारपूर्व्वाः शषसा बहुलं भवन्ति । यथा-
संख्यम् । ऋग्विषये प्रयोगे ।

यांश्च विद्म याँ उ च न प्रविद्म। ऋ० १०।१५।१३ ॥ पशूंस्तांश्चक्रे वायव्यान्। मा० ३१।६ ॥ ऋतूंस्तन्वते कवयः प्रजानतीः। तै० स० ४।३।११ ॥ तांस्त्वं स्वाद सुस्वादितान्। तै० स०। का०। नचभवति। पूषन्तव व्रते वयं। मा० ३४।४१ ॥ विश्वा यस्मिन्तुविष्वणि। ऋ० ५।१६।३ ॥ तद्देवा अब्रुवन्तद्व-आगमं। ऋ० १।१६१।२ ॥ तव शरीरं पतयिष्णर्वन्तव चित्तं वात इव ध्रजीमान्। तै० स० ४।६।७ ॥ सखे वज्रिन्तथा कृणु। ऋ० १।३०।१२ ॥ येन वंसाम पृतनासु शत्रून्तवोति-भिरुत जामीँरजामीन्। ऋ० ६।१९।८ ॥ यं सीमकृण्वन्तमसे विपृचे। ऋ० ४।१३।३ ॥ पशून् तान् चक्रे। सि०। तस्मिंस्त्वा दधाति। तस्मिन् त्वा दधाति। का०। मृग्यं टठयो-रुदाहरणम्।

ऋचीति किम्। यस्मिꣳश्चन्द्रमा विभाति। तै० ब्रा० १।४।१० ॥ यएषां पशवस्ताँस्ते दास्यन्ति। तै० स० ३।१।८ ॥ दिवि विष्णुर्व्यक्रंस्त जागतेन छन्दसा। मा० २।२५ ॥ देवा वै यं यमेव वज्रमसुरेभ्य उपायच्छंस्तन्तमेवासुराः प्रत्यबुध्यन्त। ऐ० ब्रा० २।३० ॥ तथयोः सकारमिति नित्यं स्यात्।

कथं, यएषां पशव आसन्तानस्मा अददुः। तै० स० ३।१।८ ॥ संहिता पदयोर्विभाषितैव। वचनन्तु संहितायामेव बाहुलका-र्थम्। छान्दसो व्यत्ययो वा।

चटतवर्गाणामिति किम्। तं राजन् पारयामसि। ऋ० १०।९७।२२ ॥ प्रथमद्वितीयोरिति किम्। आर्ष्टिषेणो होत्र-मृषिर्निषीदन्देवापिर्देवसुमतिं चिकित्वान्। ऋ० १०।९८।५ ॥

नस्येति किम् । एतत्त्यत्त इंद्र वृष्ण उक्थं । ऋ० १।१००।१७ ॥
अन्तस्येति किम् । तमु त्वा वृत्रहंतमं । ऋ० १।७८।४ ॥

## विसृष्टो दीर्घात् स्वरह्यवरेषु ॥ ८

स्वरह्यवरेषु परतो दीर्घात् परस्य पदान्तस्य नकारस्य बहुलं विसर्जनीयो भवति । ऋग्विषये प्रयोगे ।

देवाँ अच्छा ब्रह्मकृता गणेन । ऋ० ७।९।५ ॥ महाँ इंद्रो य ओजसा पर्जन्यो वृष्टिमाँ इव । ऋ० ८।६।१ ॥ विदे वृधस्य दक्षस्य महाँ हि षः । सा० छ० ४।२।५।१ ॥ तवाँ वा यत् पुष्यति रेक्णः । ऋ० १०।१३२।३ ॥ नलोपे कृते सन्धिः स्यात् । एवमन्येऽपि । न च भवति । पयस्वानग्न आगहि । ऋ० १।२३।२३ ॥ आदित्यान् याचिषामहे । ऋ० ८।६७।१ ॥ सो अस्मान् राजा वरुणो मुमोक्तु । ऋ० १।२४।१२ ॥ महान् ह्यस्य महिमा पनस्यते । ऋ० १०।७५।९ ॥

दीर्घादिति किम् । अहन्नहिं पर्वते शिश्रियाणं । ऋ० १।३२।२ ॥ स्वरह्यवरेष्विति किम् । अस्मान्त्सु तत्र चोदय । ऋ० १।९।६ ॥ शतं महिषान् क्षीरपाकमोदनं । ऋ० ८।७७।१० ॥ नकारस्येत्येव । राजा वृत्रं जंघनत् प्रागपागुदक् । ऋ० ३।५३।११ ॥ पदान्तस्येत्येव । पूषा राजानमा घृणिः । ऋ० १।२३।१४ ॥

भिन्नपादेऽपि दृश्यते । त्वमुत्साँ ऋतुभिर्बद्धधानाँ अरंह ऊधः पर्वतस्य वज्रिन् । ऋ० ५।३२।२ ॥ युक्ष्वा हि देवहूतमाँ

अश्वाँ अग्ने रथीरिव । ऋ० ८।७५।१ ॥ उत नो देव देवाँ अच्छा वोचो विदुष्टरः । ऋ० ८।७५।२ ॥ न च भवति । अयोदंष्ट्रो-अर्चिषा यातुधानानुपस्पृश जातवेदः समिद्धः । ऋ० १०।८७।२ ॥ त्वया वयं मघवन्निंद्र शत्रूनभि ष्याम महतो मन्यमानान् । ऋ० १।१७८।५ ॥ इह, समानपादे इति पाणिनीया स्मृतिः ।

ऋचीतिरव । तान्त्सब्धान्मृतानभिव्यौच्छत् । तै० स० २।४।१ ॥ अरुन्मुखान् यतीन् सालावृकेभ्यः प्रायच्छं । कौ० उ० ३।१ ॥ यः पशूनिच्छेत् प्रयाजाहुतिभिः प्रत्यङ् स इयात् । ऐ० ब्रा० १।२।२ ॥

## स्वतवानः पायौ ॥ ९

पायुशब्दे परतः स्वतवानितेरतस्य नकारस्य विसर्ज्जनीयो भवति ।

भुवस्तस्य स्वतवाः पायुरग्ने । ऋ० ४।२।६ ॥ पायाविति किम् । स्वतवांश्च प्रघासी च । मा० १७।८५ ॥

## तस्मिन्ननुनासिकः पूर्व्वस्यानुस्वारो वाऽन्तः ॥ १०

एकाऽपीयं षष्ठ्यर्थवशात् द्विधा भिद्यते । नकारप्रकृतौ विसर्जनीये परतः पूर्व्वस्य स्वरस्यानुनासिको भवति । ततः परोऽनुस्वारागमो वा भवति ।

देवाँ अच्छा दीद्यद्युंजे अद्रिं । ऋ० ३।१।२ ॥ महाँ इंद्रोय ओजसा पर्जन्यो वृष्टिमाँ इव । ऋ० ८।६।१ ॥ इति बह्वृचाः । शाखान्तरे त्वनुस्वारमधीयते । येषां अग्ने

सुभग धारयेह । का० ४।२३।७ ॥ इति काण्वाः । आथर्व्वणिकास्त्वाकारमनुनासिकमन्यत्र त्वनुस्वारमधीयते । रक्षः पिशाचाँ अपबाधमानः । अ० १२।३।१५ ॥ ऋतूंरन्यो विदधज्जायसे नवः । अ० ७।७।१ ॥

तथा । ये वा वनस्पतीँरनु । तै० स० ४।२।८ ॥ छिणन्ति शत्रूँरनपव्ययन्तः । तै० स० ४।६।६ ॥ वनस्पतीँरश्विनावैरयेथां । ऋ० १।१५७।५ ॥ वनस्पतीँरसनोदन्तरिक्षं । ऋ० ३।३४।१० ॥ वनस्पतीँरोषधी राय एषे । ऋ० ५।४१।८॥ जहि शत्रूँरपमृधो नुदस्व । ऋ० ३।४७।२ ॥ जहि शत्रूँरभिगा इंद्र तृंधि । ऋ० ६।१७।३ ॥ तवोतिभिरुत जामीँरजामीन् । ऋ० ६।१९।८ ॥ यः सप्त सिन्धूँरदधात् पृथिव्यां । तै० ब्रा० २।८।३ ॥ ये ते हवेभिर्वि पणीँरदाशन् । ऋ० ७।१९।९ ॥ नीँरतून् परिदीयथः । ऋ० ८।५।८ ॥ इत्यात इति पाणिनीया स्मृतिः ।

तस्मिन्निति किम् । अतो देवा अवंतु नः । ऋ० १।२२।१६ ॥ पूर्व्वस्येति किम् । परस्य मा भूत् । कथं, युष्मा इन्द्रोऽवृणीत वृत्रतूर्ये । मा० १।१३ ॥ बहुलाधिकारादियमिष्टसिद्धिः । विभक्तेर्डाऽऽदेशो वा ।

## अम्नसूधसवसां रो वा ॥ ११

अम्नस् ऊधस् अवस् इत्येतेषामन्तस्य रो भवति वा ।

अम्नरेव । अम्नएव । ऊधरेव । ऊधएव । अवरेव । अवएव । का० । दुहंत्यूधर्दिव्यानि धूतयः । ऋ० १।६४।५ ॥ रिहंत्यूधो·

अर्हयासो अस्य। ऋ० १।१४६।२॥ अपावरद्रिवो विलं। ऋ० १।११।५॥ अप अवः अद्रिवः इत्यवग्रहे पठ्यते। सम्राजोरव आ वृणे। ऋ० १।१७।१॥ महि त्रीणामवरस्तु। सा० छ० २।२।५।८॥ इति छन्दोगाः। महि त्रीणामवोऽस्तु। ऋ० १०।१८५।१॥ इति बह्वृचाः।

## महाव्याहृतेश्च भुवः॥ १२

तिस्रः किल महाव्याहृतयो भूर्भुवःस्वःस्वरूपाः पृथिव्यन्तरिक्षस्वर्गाणां वाचिकाः। महाव्याहृतिरूपस्य भुवइतेरतस्य रो-भवति वा। अर्थादन्तस्य।

भुवरित्यन्तरिक्षं। भुव इत्यन्तरिक्षं। का०। भुव इति वायुः। भुव इत्यपानः। तै० आ० ७।५॥ साम्नैषा महाव्याहृतिः। रेफान्ताएवैता महाव्याहृतयः। विधानसामर्थ्यात्तु पक्षे रप्रकृतिरनामिपरोऽपीति न प्रवर्त्तते इति केचित्।

महाव्याहृतेरिति किम्। भुवो विश्वेषु सवनेषु यज्ञियः। ऋ० १०।५०।४॥ भवतेर्ह्रस्वन्याः सिः। अङ्गुणयोरभावः। तत उवादेशः। भुव इति किम्। भूरित्याह। सुवरित्याह। तै० ब्रा० १।१।५॥ रप्रकृतिरिति नित्यं स्यात्।

इति चान्द्रकान्त्यां कातन्त्रच्छन्दःप्रक्रियायां तृतीयः पादः।

सन्धौ चतुर्थः पादः ।

## सो विसृष्टस्य कपवर्गयोरप्राम्रेडितयोः ॥ १

आम्रेडितं द्विरुक्तिः । प्रशब्दमाम्रेडितं च वर्जयित्वा कवर्ग-पवर्गयोः परतो विसर्जनीयस्य बहुलं सकारो भवति ।

अग्ने त्वातऋतस्कविः । ऋ० ८.६०।५ ॥ उरणस्कारः । का० । त्वं रयिर्बहुलो विश्वतस्पृथुः । ऋ० २।१।१२ ॥ अय-स्पात्रं । विश्वतस्पात्रं । का० । तथा । इंद्राय यो नः प्रदिवो-अयस्कः । ऋ० ६।२३।५ ॥ सरस्वती नः सुभगा मयस्करत् । ऋ० १।८९।३ ॥ सुपेशसस्करति जोषिषद्धि । ऋ० २।३५।१ ॥ उरु क्षयाय नस्कृधि । ऋ० ८।६८।१२ ॥ सोमं न चारुं मघवत्सु नस्कृतं । ऋ० १०।३९।२ ॥ पर्णे वो वसतिष्कृता । ऋ० १०।९७। ५ ॥ न च भवति । उरणः कारः । का० । यथा नो अदितिः करत् । ऋ० १।४३।२ ॥ अयः पात्रं । विश्वतः पात्रं । का० । सूर्यरश्मिर्हरिकेशः पुरस्तात् । ऋ० १०।१३९।१ ॥ वीरुधः पारयिष्णवः । ऋ० १०।९७।३ ॥ तथा । क्वेदानीं सूर्यः कश्चिकेत । ऋ० १।३५।७ ॥ दक्षाय्याय दक्षता सखायः करद्ब्रह्मणे सुतरा सुगाधा । ऋ० ७।९७।८ ॥ शं नः करत्यर्वते । ऋ० १।४३।६ ॥ उप त्वेमः कृधि नो भागधेयं । ऋ० ८।९६।८ ॥ बाहू राजन्यः कृतः । ऋ० १०।९०।१२ ॥

विसृष्टयोरिति किम् । भरामेध्मं कृणवामा हवींषि ते । ऋ० १।९४।४ ॥ कपवर्गयोरिति किम् । पिता यत्र दुहितुः सेकमृंजन् । ऋ० ३।३१।१ ॥ राजानः समिताविव । ऋ० १०।९७।६ ॥ अप्राम्रेडितयोरिति किम् । देवा न आयुः प्र तिरंतु जीवसे । ऋ० १।८९।२ ॥ गयस्फानः प्रतरणः सुवीरः । ऋ० १।९१।१९ ॥ दीद्यानः शुचिर्ऋष्वः पावकः पुनः पुनर्मातरा नव्यसी कः । ऋ० ३।५।७ ॥ कथं, अंगमंगं परुष्परुः । ऋ० १०।९७।१२ ॥ पथस्पथः परिपतिं वचस्या । मा० ३४।४२ ॥ आम्रेडिते निषेधो न त्वाम्रेडितस्य । तर्हि कथं, पुनः पुनर्मातरा नव्यसी कः ॥ परुषः परुषस्परि । मा० १३।२० ॥ बाहुलकत्वात् संहिताया अविवक्षणाद्वा । प्राम्रेडितयोर्वर्जनं बाहुलकस्यैव विषयप्रपञ्चार्थम् ।

## पञ्चम्याः पातौ ॥ २

तिपा धातुरेव निर्दिश्यते । पञ्चमीप्रथमपुरुषैकवचनान्तस्यानुकरणमित्येके । पातौ परतः पञ्चमीविसर्जनीयस्य बहुलं सकारो भवति ।

सूर्य्यो नो दिवस्पातु । ऋ० १०।१५८।१ ॥ वाजो नु ते शवसस्पात्वंतं । ऋ० ५।१५।५ ॥ रात्रस्पातु । का० । तथा । वि चक्रमे रजसस्पात्वंतौ । ऋ० ५।४७।३ ॥ आ नो देव रिषस्पाहि । तै० स० १।४।४५ ॥ विश्वाभ्यो मा नाष्ट्राभ्यस्पाहि ।

मा० ३७।१२ ॥ न च भवति । सनो दिवा स रिषः पातु नक्तं ।
ऋ० १०।८७।१ ॥ परिषदः पातु । का० ।

पञ्चम्या इति किम् । स्वस्ति नो रुद्रः पात्वंहसः । ऋ०
५।५१।१३ ॥ पाताविति किम् । इतो जातो विश्वमिदं वि चष्टे ।
ऋ० १।९८।१ ॥ विसर्जनीयस्येत्येव । पृथिवी नः पार्थिवात्
पात्वंहसः । ऋ० ७।१०४।२३ ॥

## परौ चोपर्य्यर्थे ॥ ३

उपर्य्यर्थे परिशब्दे परतः पञ्चमीविसर्जनीयस्य सकारो-
भवति ।

दिवस्परि प्रथमं जज्ञे अग्निः । ऋ० १०।४५।१ ॥
अग्निर्हिमवतस्परि । का० । ऋतेन देवान् हवते दिवस्परि ।
ऋ० ८।८०।१ ॥ हस्काराद्विद्युतस्परि । ऋ० १।२३।१२ ॥ उद्वयं
तमसस्परि । ऋ० १।५०।१० ॥

परावविति किम् । एभ्योवा एतल्लोकेभ्यः प्रजापतिः समै-
रयत् । का० । परस्या अधि संवतः । मा० ११।७१ ॥ उपर्य्यर्थे
इति किम् । दिवः पृथिव्योः परि ओज उद्भृतं वनस्पतिभ्यः
पर्य्याभृतꣳसहः । तै० स० ४।६।६ ॥ ते अग्नेः परि जज्ञिरे ।
ऋ० १०।६२।५ ॥ परिरिह सर्व्वतोभावार्थः । पञ्चमीविसर्जनीयस्य
इत्येव । स त्वैतेभ्यः परि ददत् पितृभ्यः । ऋ० १०।१७।३ ॥
पर्जन्योः पर्य्युक्षति । ऋ० १०।८५।१३ ॥ अहिरिव भोगैः

पर्येति बाहु। ऋ० ६।७५।१४ ॥ कथं, दिव ओषधयस्परि। ऋ० १०।९७।१७। पञ्चमीविसर्जनीयस्य परावेवेति स्यादेव।

## पतिपुत्रपदपृष्ठपारपयस्पोषेषु षष्ठ्याः ॥ ४

पतिपुत्रादिषु परतः षष्ठीविसर्जनीयस्य सकारो भवति।

पति। वाचस्पतिं विश्वकर्म्माणमूतये। ऋ० १०।८१।७ ॥ सदसस्पतिमद्भुतं। ऋ० १।१८।६ ॥ पुत्र। दिवस्पुत्राय सूर्याय शंसत। ऋ० १०।३७।१ ॥ दिवस्पुत्राय मीळ्हुषे। ऋ० ७।१०२।१ ॥ त्वामाहुः सहसस्पुत्रमंगिरः। ऋ० ५।११।६ ॥ पद। इळस्पदे समिध्यसे। ऋ० १०।१९१।१ ॥ इळस्पदे मनुषा यत् समिद्धः। ऋ० २।१०।२ ॥ पृष्ठ। दिवस्पृष्ठे धावमानं सुपर्णं। का०। दिवस्पृष्ठे वि तन्वते। ऋ० ९।६६।५ ॥ पार। अगन्म तमसस्पारं। का०। अतारिष्म तमसस्पारमस्य। ऋ० १।९२।६ ॥ पयः। सूर्यं चक्षुर्दिवस्पयः। का०। दिवस्पयो दिधिषाणा अवेषन्। ऋ० १०।११४।१ ॥ पोष। रायस्पोषं यजमानेषु धत्तं। ऋ० ८।५९।७ ॥ रायस्पोषमिषमूर्जमस्मासु दीधरत्। तै० ब्रा० २।६।३ ॥ सह प्रजया सह रायस्पोषेण। तै० स० १।३।४ ॥

कथं, इन इनस्य वसुनः पद आ। ऋ०।१४९।१ ॥ विष्णोः पदे परमे मध्व उत्सः। ऋ० १।१५४।५ ॥ बृहस्पतिस्त्वा सादयतु पृथिव्याः पृष्ठे। प्रजापतिस्त्वा सादयतु दिवः पृष्ठे। तै०

स० ४।४।६ ॥ सद्यो अस्याध्वनः पारमश्नुथ । ऋ० ५।५४।१० ॥ सबर्दुघायाः पय उस्त्रियायाः । ऋ० १।१२१५ ॥ मित्रावरुणयोः पयस्याथ । तै० ब्रा० १।५।११ ॥ बहुलाधिकारात् संहिताऽभावाद्वा ।

एष्विति किम् । मूर्द्धा विश्वस्य वाघतः । ऋ० ६।१६।१३ । वसोः पवित्रमसि । मा० १।२ ॥ वसोः स्पार्हस्य पुरुहूत राधसः । ऋ० ८।२४।८ ॥ षष्ठ्या इति किम् । यं वर्धयंतीद्गिरः पतिं तुरस्य राधसः । ऋ० ६।४४।५ ॥ मनुः पुत्रेभ्यो दायं व्यभजत् । तै० स० ३।१।९ ॥ स वह्निः पुत्रः पित्रोः पवित्रवान् । ऋ० १।१६०।३ । इषुधिः संकाः पृतनाश्च सर्वाः पृष्ठे निनद्धो जयति प्रसूतः । ऋ० ६।७५।५ ॥ एवमन्येऽपि ।

कथं, दुरो यवस्य वसुन इनस्पतिः । ऋ० १।५३।२ ॥ द्रवत्पाणी शुभस्पती । ऋ० १।३।१ ॥ हरिरोपशं कृणुते नभस्पयः । ऋ० ९।७१।१ ॥ षष्ठ्याः पत्यादिष्वेवेति स्यादेव । विसर्जनीयस्येत्येव । क्षेत्रस्य पते मधुमंतमूर्मिं । ऋ० ४।६७।२ ॥ बह्वीनां पिता बहुरस्य पुत्रः । ऋ० ६।७५।५ । इत्यादि ।

## इडाया वा ॥ ५

इडाशब्दात् परस्य षष्ठीविसर्जनीयस्य पतिपुत्रादिषु परतः सकारो भवति वा ।

इडायास्पतिः । इडायाः पतिः । इडायास्पुत्रः । इडायाः पुत्रः । इडायास्पदं । इडायाः पदं । इडायास्पृष्ठं । इडायाः

पृष्ठं । इड़ायासारं । इड़ायाः पारं । इड़ायास्पोषं । इड़ायाः पोषं । का० । इळायास्पुत्रो वयुनेऽजनिष्ट । ऋ० ३।२९।३ ॥ इळायास्पदे घृतवंतमासदः । ऋ० १०।९१।४ ॥ एतद्वा इळायास्पदं यदुत्तरवेदिः । ऐ० ब्रा० । तै० स० भा० ॥ इड़ायास्पदमसि । मा० ४।२२ ॥ इति माध्यन्दिनीयाः । इलायास्पदं । का० २।२२ ॥ इति काण्वाः । देवयजनइड़ायाः पदे । तै० स० १।२।५ ॥ इति तैत्तिरीयाः । पतिपुत्रादिष्वित्येव । अरुषो-जातः पद इळायाः पुरोहितो राजन् यक्षीह देवान् । ऋ० १०।१।६ ॥

## स्याल्लोपो व्यञ्जने ॥ ६

षष्ठ्यादिति न स्मर्यते । स्यात् परस्य विसर्जनीयस्य लोपो-भवति वा । व्यञ्जने परे ।

उत स्य वाजी क्षिपणिं तुरण्यति । ऋ० ४।४०।४ ॥ एष स्य-ते मधुमाँ इंद्र सोमः । ऋ० ९।८७।४ ॥ एष स्य भानुरुदियर्ति युज्यते । ऋ० ४।४५।१ ॥ उदु ष्य वः सविता सुप्रणीतयः । ऋ० ८।२७।१२ ॥ एष स्य सोमो मतिभिः पुनानः । ऋ० ९।९६।१५ ॥ न च भवति । यत्र स्यो निपतेत् । का० । वा व्यवस्थावाचीह ।

स्यादिति किम् । यस्ते सखिभ्य आ वरं । ऋ० १।४।४ ॥ सिलोपे लवग्रहः पदकाराणां नोपपद्यते । ते हि, स्यः इत्यव-गृह्णन्ति । अतोऽयमारम्भः ।

## षोव्युपधस्य कपवर्गयोः ॥ ७

उश्च इश्च वौ । वौ उपधे यस्यासौ व्युपधः । उकारेकारोपधस्य विसर्जनीयस्य षकारो भवति । कपवर्गयोः परयोः ।

यत् पर्जन्यः स्तनयन् हंति दुष्कृतः । ऋ० ५।८३।२ ॥ यच्छता नो दुष्परिहंतु शर्म्म । ऋ० २।२७।६ ॥ निष्कृण्वाना आयुधानीव धृष्णवः । ऋ० १।८२।१ ॥ ऋच्छंति ष्मा निष्पदो मुद्गलानीं । ऋ० १०।१०२।६ ॥ घोषवति रेफएव प्रमाणम् । वि दुर्गा वि द्विषः पुरः । ऋ० १।४१।३ ॥ दुःऽगा इत्यवगृह्णन्ति । परि त्वेषस्य दुर्मतिर्मही गात् । ऋ० २।३३।१४ । निर्मथितः सुधित आ सधस्थे । ऋ० ३।२३।१ ।

व्युपधस्येति किम् । असामि हि प्रयज्यवः कण्वं दद प्रचेतसः । ऋ० १।३९।९ ॥ त्वं पिप्रोर्नृमणः प्रारुजः पुरः । ऋ० १।५१।५ ॥ भाषायामपीति मतम् ।

## द्विर्भावो विश्वजनादिभ्यश्छकारस्य विभाषा ॥ ८

विश्वजनादिभ्यः परस्य छकारस्य द्विर्भावो भवति वा। प्राप्ते विभाषा ।

विश्वजनच्छत्रं । विश्वजनछत्रं । न च्छायां कुरवोऽपरां । न छायां कुरवोऽपरां । का० । अच्छांत मे छदयाथा च नूनं । ऋ० १।१६५।१२ ॥ द्यौरासीदुत छदिः । ऋ० १०।८५।१० ॥ त्रिष्टुब्गायत्री छंदांसि । ऋ० १०।१४।१६ ॥ यस्य छायामृतं यस्य मृत्युः । ऋ० १०।१२१।२ ॥ विश्वजनादिराकृतिगणः । तस्यैवापि शब्दस्य प्रपञ्चार्थोऽयं योगः ।

## वस्नादीनि यथोपदिष्टम् ॥ ९

वस्नादीनि यथैवोपदिष्टानि तथैव निपातयितव्यानि। वस्नेव विक्रीणावहै। तै० स० १।८।४॥ वसुना इति प्राप्ते। तुभ्येदमग्ने। भा०। तुभ्यमिदमग्नये इति प्राप्ते। आम्बानां चरुं। भा०। नाम्बानामिति प्राप्ते। आव्याधिनी उगणाः। भा०। सुगणा इति प्राप्ते। शिवा उद्रस्य भेषजी। भा०। रुद्रस्य इति प्राप्ते। इष्कृणुध्वं रशना ओत पिंशत। ऋ० १०।५३।७॥ निष्कृणुतेति प्राप्ते। इष्कर्त्तारमध्वरस्य। ऋ० १०।१४०।५॥ निष्कर्त्तारमिति प्राप्ते। गयस्फानो गोभिरश्वेभिरिंदो। ऋ० ७।५४।२॥ गयस्फायन इति प्राप्ते। ये मह्नोरजसो विदुः। ऋ० १।१९।३॥ महत इति प्राप्ते। प्र तव्यसीं नव्यसीं धीतिमग्नये। ऋ० १।१४३।१॥ तवीयसीं नवीयसीमिति प्राप्ते। यथाऽऽम्नानं संहितायामवग्रहे च वचनं प्रवर्त्तते। वस्नादिराकृतिगणः।

इति चान्द्रकान्त्यां कातन्त्रच्छन्दःप्रक्रियायां सन्धौ चतुर्थः पादः।

नाम्नि चतुष्टये प्रथमः पादः ।

## षष्ठीयुक्तः पतिरग्निष्टादौ वा ॥ १

पातरसमासे इति प्रतिषेधबाधनार्थोऽयं योगः। षष्ठ्यन्तेन युक्तः पतिशब्दोऽग्निसंज्ञको भवति वा। टादौ स्वरे परे।

क्षेत्रस्य पतिना वयं। ऋ० ४।५७।१ ॥ ब्रह्मणस्पतेरभवद्‌-यथा वशं। ऋ० २।२४।१४ ॥ दाधार धर्म्मणस्पतिः। ऋ० ८।३५।६ ॥ पत्तीनां पतये नमः। मा० १६।१८ ॥ कुलुञ्चानां पतये नमः। कुलुञ्चानां पत्ये नमः। का०।

षष्ठीयुक्त इति किम्। मया पत्या जरदष्टिर्यथासः। ऋ० १०।८५।३६ ॥ जायेव पत्य उशती सुवासाः। ऋ० १।१२४।७ ॥ पतिरिति किम्। शिवा नः सख्या संतु। ऋ० ४।१०।८ ॥ येषां सख्ये असि श्रितः। ऋ० ३।८।२ ॥ टादाविति स्पष्टार्थम्।

## बहुलं लोपो विभक्तीनां पूर्व्वस्य च दीर्घः ॥ २

स्यादीनां विभक्तीनां बहुलं लोपो भवति। पूर्व्वस्य च स्वरस्य दीर्घः। प्रत्यासत्त्या विभक्त्युपश्लिष्टस्यैव स्वरस्य दीर्घो न व्यवहितस्य।

तस्थौ व जती मरुतो यमावत। ऋ० १।१६४।१३ ॥ कया मती कुत एतास एते। ऋ० १।१६५।१ ॥ धीत्यग्ने मनसा सं

श्वि जग्मे । ऋ० १।१६४।८ ॥ जत्या मत्या धीत्येति प्राप्ते । देवी द्यावापृथिवी । मा० ३७।३ ॥ देव्यौ द्यावापृथिव्या-विति प्राप्ते । आर्द्रे चर्म्मन् । लोहिते चर्म्मन् । भा० । ससस्य चर्म्मन्नधि चारु पृश्नेः । ऋ० ४।५।७ ॥ चर्म्मणीति प्राप्ते । कर्म्मन् कर्म्मन् वृषणमिंद्र देवाः । ऋ० १०।२८।७ ॥ कर्म्मणि कर्म्मणीति प्राप्ते । सहस्राक्षरा परमे व्योमन् । ऋ० १।१६४।४१ ॥ व्योमनीति प्राप्ते । प्रत्ययलोपे प्रत्ययलक्षणमित्यनित्येयम् । तेनानोऽकारस्य लिङ्गान्तनकारस्य च लोपो न स्यात् । यदेवैनं यज्ञ उपनमेदथा-दधीत । मै० भा० । यदैवेति प्राप्ते । हविर्धाने यत् सुन्वन्ति तत् सामिधेनीरन्वाह । का० । यस्मिन् तस्मिन्निति प्राप्ते । तत्र साक्षाद्विभक्तिग्रहणान्न त्यदाद्यत्वम् ।

न च भवति । त्वं नश्चित्र जत्या वसो । ऋ० ६।४८।९ ॥ त्वया मत्या मरुतः सं मिमिक्षुः । ऋ० ५।५८।५ ॥ वि चर्म्म-णीव धिषणे अवर्तयत् । ऋ० ६।८।३ ॥ यस्मिन्निंद्रो मित्रो-वरुणोऽअर्यमा । ऋ० १।४०।५ ॥ तस्मिन्ना तस्थुर्भुवनानि विश्वा । ऋ० १।१६४।१३ ॥ एवमन्येऽपि । अन्वाचयशिष्टोऽयं चकारः ।

## जसस्त्वादेः

जसस्त्वादेर्बहुलं लोपो भवति । पूर्व्वस्य च दीर्घः ।

तस्य साध्वीरिषवो याभिरस्यति । ऋ० २।२४।८ ॥ यावतीः कियतीश्च प्रजावाचं वदन्ति । तै० ब्रा० २।७।५ ॥ अनायतन-वतीर्वा अन्या आहुतयो हूयन्ते । तै० स० ३।१।९ ॥ यं नो-

देवीरभीष्टये । मा० ३६।१२ ॥ माध्वीर्गावो भवंतु नः । ऋ० १।६०।८ ॥ उप त्वा जामयो गिरो देदिशतीर्हविष्कृतः । सा० छ० १।१।२।३ ॥ देवानां पत्नीरुशतीरवन्तु नः । अ० ७।४६।१ ॥ न च भवति । प्रतीपं शापं नद्यो वहंति । ऋ०१०।२८।४ ॥ मार्जाल्यो मृज्यते स्वे दमूनाः । ऋ० ५।१।८ ॥ देव्यो वम्रः । मा० ३७।४ ॥ इमाः सोम्य नद्यः पुरस्तात् प्राच्यः स्यन्दन्ते पश्चात् प्रतीच्यः । छा० उ० ६।१०।१ ॥

जस इति किम् । वातेवाजुर्या नद्येव रीतिः । ऋ० ३। ऋ० २।३९।५ ॥ नद्या इव इति पदकाराः पठन्ति ।

## आजादयारियाडियाडेडाड्यायेतः ॥ ४

विभक्तीनां स्थाने आच् आत् अयार् इया डिया डे डा ड्या या ईत् इतीत्ते आदेशा बहुलं भवन्ति । चकारः आचि गुणोनाम्यन्तस्येति विशेषणार्थः । रेफ उच्चारणार्थः । डकारा डानुबन्धकार्यार्थाः । तकारः स्वरूपग्राहकः ।

आच् । उभा कर्णा हिरण्यया । ऋ० ८।७२।१२ ॥ उभौ कर्णौ हिरण्ययौ इति प्राप्ते । या सुरथा रथीतमोभा देवा दिविस्पृशा । अश्विना ता हवामहे । ऋ० १।२२।२ ॥ यौ सुरथौ रथीतमौ उभौ देवौ दिविस्पृशौ अश्विनौ तौ इति प्राप्ते । वसन्ता यजेत । का० । यो वसन्ताग्निमाधत्ते मुख्य एव भवति । तै० ब्रा० १।१।२ ॥ वसन्ता प्रातराग्नेयीं कृष्णग्रीवीमालभेत । तै० स० २।१।२ ॥ वसन्ते इति प्राप्ते ।

आत्। न तादृग्ब्राह्मणं। सि०। तमिति प्राप्ते। न तादृग्ब्राह्मणाद् निन्दामि। का०। तान् ब्राह्मणानिति प्राप्ते। यादेव विद्म तात् त्वा महांतं। ऋ० ६।२१।६॥ यं तमिति प्राप्ते।

अयाद्। स नः सिंधुमिव नावया। ऋ० १।९७।८॥ नावेति प्राप्ते।

इया। दभ्रं पश्यद्भ्य उर्विया विचक्ष। ऋ० १।११३।५॥ उरुरिति प्राप्ते। घृतेनाहुत उर्विया वि पप्रथे। ऋ० १०।६९।२॥ उरु इति प्राप्ते। दार्विया परिज्मन्। भा०। दारुणेति प्राप्ते।

डियाः। सुक्षेत्रिया सुगातुया। ऋ० १।९७।२॥ सुक्षेत्रिणेति प्राप्ते। गायत्रिया क्रियमाणस्य यज्ञे। तै० ब्रा० १।२।१॥ गायत्रेति प्राप्ते।

डे। न युष्मे वाजबंधवः। ऋ० ८।६८।१९॥ यूयमिति प्राप्ते इत्येके। युष्मास्विति प्राप्ते इत्यन्ये। त्वे सोम प्रथमा वृक्तबर्हिषः। ऋ० ९।११०।७॥ त्वयीति प्राप्ते। अस्मे ते बन्धुः। नि० नै० ५॥ वयमिति प्राप्ते। अस्मे यातं नासत्या सजोषाः। ऋ० १।११८।११॥ अस्मानिति प्राप्ते। भूरि चकर्थ युज्येभिरस्मे समानेभिर्वृषभ पौंस्येभिः। ऋ० १।१६५।७॥ अस्माभिरिति प्राप्ते। अस्मे प्र यंधि मघवन्नृजीषिन्निंद्र रायो विश्ववारस्य भूरेः। अस्मे शतं शरदो जीवसे धा अस्मे वीरान्छश्वत इंद्र शिप्रिन्। ऋ० ३।३६।१०॥ अस्मभ्यमिति प्राप्ते। स सुत्रामा स्ववाँ इंद्रो अस्मे आराच्चिद्द्वेषः सनुतर्युयोतु। ऋ० ६।४७।१३॥ अस्मदिति प्राप्ते। उर्व इव पप्रथे कामो अस्मे।

ऋ० १।३०।१८ ॥ अस्माकमिति प्राप्ते। अस्मे द्युम्नमधि रत्नं च धेहि। ऋ० ७।५२।३ ॥ अस्मास्विति प्राप्ते।

ङा। नाभा पृथिव्या भुवनस्य मज्मना। ऋ० १।१४३।४ ॥ नाभौ इति प्राप्ते।

आ। ता अनुष्ठ्योच्चावयतात्। ऐ० ब्रा० २।६ ॥ अनुष्ठयेति प्राप्ते। अनुष्ठानमनुष्ठा। भिदादित्वादङ्। गणनेतैतत्। ता वङ्क्रीरनुष्ठया गणनया भवान् पृथक् करोत्वितैतरके। अनुष्ठ्या अनुक्रमेण इति पुनर्वेदभाष्ये सायणाचार्य्याः। वङ्क्रयः पार्श्वास्थीनि। षड्विंशतिरस्य वङ्क्रयस्ता अनुष्ठ्योच्चावयतात् इति खल्वध्वर्य्युप्रैषः पठ्यते। कथमनुष्टुभेति जयादित्येनोक्तम्।

या। तेभिः कल्पस्व साधुया। ऋ० १।१७०।२ ॥ साध्विति प्राप्ते। स्वप्नया स च सेचनं। का०। स्वप्नया वाव सेचनं। भा०। स्वप्नेनेति प्राप्ते। सह सच्चस्कारर्ध्विया। तै० आ० १।२ ॥ ऋद्ध्येत्य इति प्राप्ते।

ईत्। दृतिं न शुष्कं सरसी शयानं। ऋ० ७।१०३।२ ॥ सरसि इति प्राप्ते इति भाष्यस्थितिः। स्वरे त्वास्थेयं प्रयत्नान्तरम्। ङेरीकारे कृते ह्याद्युदात्तं पदं प्राप्नोति। पठ्यते त्वन्तोदात्तमिति। स्त्रीदन्तात् सरसीशब्दात् ङिलोपे पदमिदम्। ईकारस्य त्वन्वेष्यमुदाहरणमित्याहुः। तथा। ऋभवो विष्ट्यक्रत। ऋ० १।२०।४ ॥ विष्टय इति प्राप्ते जस ईकार इति वेदभाष्ये। यच्छे हात्मनसी प्राप्तः। का० ७०। मनसि इति प्राप्ते। न च भवति। उभौ वर्णावृषिरुग्रः पुपोष। ऋ० १।१७९।६ ॥ इत्यादि।

## आसकाराज्जसि ॥ ५

लिङ्गान्तादकाराद् बहुलमासित्ययमागमो भवति। जसि-परे।

देवासः सर्व्वया विशा। ऋ० १।३९।५ ॥ ब्राह्मणासो अति-रात्रे न सोमे। ऋ० ७।१०३।७ ॥ ब्राह्मणासः पितरः सोम्यासः। ऋ० ।६।७५।१० ॥ ये पूर्वासो य उपरास ईयुः। ऋ० १०।१५।२ ॥ ते नः पूर्वासः उपरास इंदवः। ऋ० ९।७७।३ ॥ न च भवति। देवा यद्यज्ञं तन्वानाः। ऋ० १०।९०।१५ ॥ संवत्सरं शशयाना-ब्राह्मणा व्रतचारिणः। वाचं पर्जन्यजिन्वितां प्र मंडूका अवा-दिषुः। ऋ० ७।१०३।१ ॥

अकारादिति किम्। प्र सोमपा अपसा संतु नेमे। ऋ० १।५४।८ ॥ अमूर्या उप सूर्ये। ऋ० १।२३।१७ ॥ जसीति किम्। आ देवान्त्सोमपीतये। ऋ० १।१४।६ ॥

## नेतरात्तुः ॥ ६

इतरशब्दात्तुरागमो न भवति। अन्यादेस्तु तुरित्यनेन यस्तु-रागमो विहितः स इह प्रतिषिध्यते। पारिशेष्यादकारादस-म्बुद्धौ सुश्चेति प्रवर्त्तते। वार्त्रघ्नमितरं। इतरमितरमण्डमजा-यत। का०। बाधकबाधनार्थोऽयं योगः ॥

## लोपोदन्तस्यातः ॥ ७

दन्तशब्दस्य योऽयमकारस्तस्य बहुलं भवति। अर्थादन्तस्य। उभयदत आलभते। उभयतोदतः प्रतिगृह्णाति। का०।

या दतोधावति तस्यै श्यावदन् । तै० स० २।५।१ ॥ दतां यो मध्यं गच्छति । अथ० ५।२३।३ ॥ न च भवति । पत्वदन्तमालभेत । का० । सुपर्णं वस्ते मृगो अस्या दन्तः । ऋ० ६।७५।११ ॥

## भिसैस् ॥ ८

लिङ्गात् परो भिस् बहुलमैस् भवति ।

अग्निः पूर्वेभिर्ऋषिभिरीड्यो नूतनैरुत । ऋ० १।१।२ ॥ नूतनैरित्यत्र भवति । पूर्वेभिरित्यत्र न भवति । श्रुटि बहुलत्वे प्रवर्त्तते । अकारान्ताद्विहितमनकारान्तादपि भवति । नद्यैरिति । का० । स्वरान्ताद्विहितं व्यञ्जनान्तादपि भवति । दूरे ह्यध्वा जगुरिः पराचैः । ऋ० १०।१०८।१ ॥ आरे बाधेथां निर्ऋतिं पराचैः । तै० स० १।८।२२ ॥

## सार्व्वनामिकमुभयादीनाम् ॥ ९

उभयादीनां शब्दानां सार्व्वनामिकं कार्य्यं बहुलं भवति ।

येन जना उभये भुञ्जते विशः । ऋ० २।२४।१० ॥ अथा न उभयेषां । ऋ० १।२६।९ ॥ न च भवति । परेऽवर उभया-अमित्राः । ऋ० २।१२।८ ॥ भुवनेमानां वसो । ऋ० ६।१६।१८ ॥ स्वायामिव दिशि रुद्रं निरवदयते । तै० ब्रा० १।७।८ ॥ आदिर्व्यवस्थावाचीह ।

## शसादिषु मांसपृतनासानूनां मांस्पृत्स्नवः ॥ १०

शसादिषु परतो मांस पृतना सानु इत्येतेषां स्थाने मांस् पृत् स्नु इत्येते आदेशा बहुलं भवन्ति ।

यत्नीक्षणं मांसपचन्या उखायाः । ऋ० १।१६२।१३ ॥ मांस-पचन्या इति प्राप्ते । स मत्सरः पृत्सु वन्वन्नवातः । ऋ० ९।९६।८ ॥ पृतनास्विति प्राप्ते । न ते दिवो न पृथिव्या अधि-स्नुषु । भा० ॥ सानुषु इति प्राप्ते । न च भवति । ये चार्वतो मांसभिक्षामुपासते । ऋ० १।१६२।१२ ॥ न त्वा रक्षांऽसि पृतनासु जिग्युः । सा० छ० १।२।३।८ ॥ सदो दधान-उपरेषु सानुष्वग्निः परेषु सानुषु । ऋ० १।१२८।३ ॥

शसादिष्विति किम् । मांसमेकः पिंशति सूनया भृतं । ऋ० १।१६२।१० ॥ यत् सानोः सानुमारुहत् । ऋ० १।१०।२ ॥

## पादहृदयनासिकायकृच्छकृदसृङ्मासनिशायूष-दोषुदकासनानां पद्धृन्नस्यकन्शकन्नसन्मास्निश्-यूषन्दोषन्नुदन्नासनः ॥ ११

शसादिषु परतः पाद हृदय नासिका यकृत् शकृत् असृज् मास निशा यूष दोष् उदक आसन इत्येतेषां शब्दानां स्थाने पद् हृद् नस् यकन् शकन् असन् मास् निश् यूषन्-दोषन् उदन् आसन् इत्येते आदेशा बहुलं भवन्ति । यथा-संख्यम् ।

निपदश्चतुरो जहि । का० । पूर्वेण मघवन् पदा । ऋ० १०।१३४।६ ॥ इंद्राय हृदा मनसा मनीषा । ऋ० १।६१।२ ॥ हृदा पश्यन्ति मनसा विपश्चितः । ऋ० १०।१७७।१ ॥ सूकरस्त्व-

खनमसा । का० । पृष्ठे सदो नसोर्यमः । ऋ० ५।६१।२ ॥ यक्ष्मो-ऽवद्यति । का० । यक्ष्मं मतस्नाभ्यां यक्नः । ऋ० १०।१६३।३ ॥ यक्ष्मोऽवद्यति । का० । असिक्नोऽस्थावरोहति । का० । मायेव सूर्यो वसु पुर्यमा ददे । ऋ० १०।१३८।४ ॥ मासां विधानमदधा-अधि द्यवि । ऋ० १०।१३८।६ ॥ अमावास्यायां निशि यजेत । का० । या पात्राणि यूष्ण आसेचनानि । ऋ० १।१६२।१३ ॥ यत्ते दोष्णो दौर्भाग्यं । का० । उद्नः शोपालमिव वात आजत् । ऋ० १०।६८।५ ॥ उद्नो ह्रदमपिबज्जर्हृषाणः । ऋ० १०। १०२।४ ॥ नासत्यासा भुरण्यति । ऋ० ५।७३।६ ॥ आसनि किं लभे मधूनि । का० ।

न च भवति । स्वयं स यक्ष्मं हृदये नि धत्त । ऋ० १।१२२।९ ॥ दश मासाञ्छशयानः । ऋ० ५।७८।९ ॥ मंडूका-उदकादिव । ऋ० १०।१६६।५ ॥ एवमन्येऽपि । आदिर्व्यव-स्थावाची । तेन, शलादोषणी ककुद्दोषणी याचते महादेवः । भा० । इत्यादयोऽप्यनुसर्त्तव्याः । भाषायामपि पदादयः प्रयु-ज्यन्ते इति मतम् । दोष्णां चैषां किमेतत् फलमिह नगरी-रक्षणे यत् प्रयासः इत्यादि ।

## आसन्नास्यस्य ॥ १२

आस्यशब्दस्य स्थाने आसन्नित्ययमादेशो बहुलं भवति । शसादिषु ।

गर्भे योषामदधुर्वत्समासनि । ऋ० १०।५३।११ ॥ मंद्रा-

अग्नी चोदते अंतरासमि । ऋ० ८।६८।२ ॥ स्तोमो विप्रेभि-
रासया । ऋ० १।२०।१ ॥ आस्येनेति प्राप्ते तृतीयैकवचनस्य
याऽऽदेशः आस्यस्यासन् नलोपश्च । न च भवति । परि स्वयं
चिनुषे अन्नमास्ये । ऋ० १०।८१।५ ॥ अहाव्यग्ने हविरास्ये
ते । ऋ० १०।८१।१५ ॥

## सम्बुद्धाववयाः श्वेतवाः पुरोडा उक्थशाः ॥ १३

सम्बुद्धावेते कृतदीर्घा निपात्यन्ते ।
पुरोडा अग्ने पचतः । ऋ० ३।२८।२ ॥

## ह्रस्वोडलकवतामम्बार्थानामेकेषाम् ॥ १४

सम्बुद्धौ परतो डलकवतामम्बार्थानां ह्रस्वो भवति । एकेषा-
माचार्य्याणां मतेन । हे अम्बाड हे अम्बाडे । हे अम्बाल
हे अम्बाले । हे अम्बिक हे अम्बिके । का० । भाष्यवार्त्ति-
कयोस्तु नैतच्चिन्तितम् ।

## ङौ च तस्य भावे ॥ १५

सम्बुद्धौ ङौ च परतो भावेऽर्थे विहितस्य तकारस्य बहुलं
ह्रस्वो भवति ।

हे देवत हे देवते । देवते भक्तिः देवतायां भक्तिः । का० ।
भावविहितस्तकारः स्यादन्त एव ॥

## अन्यत्रापि दृश्यते ॥ १६

उक्तादन्यत्रापि ह्रस्वो दृश्यते ।

तिस्त्रः त्तपस्विरङ्गातिव्रजद्भिः । ऋ० १।११६।४ ॥ नृभ्यो-नारिभ्यो गवे । ऋ० १।४३।६ ॥ नृभ्यो नारिभ्यो अत्तवे । ऋ० ८।७७।८ ॥ इंद्राणीमासु नारिषु । ऋ० १०।८६।११ ॥ उपगायन्तु मां पतयो गर्भिणयो युवतयः । भा० । गर्भिणयो-भवन्ति । तै० स० । आपो वरुणस्य पत्नय आसन् । तै० ब्रा० १ १।३ ॥ भूष्क्रिये दविंरेपाः । ऋ० १०।१०५।१० ॥ दृशि-ग्रहणं प्रयोगानुसारार्थम् ।

## अचि गुणो नाम्यन्तस्य ॥ १७

अचि परतो नाम्यन्तस्य लिङ्गस्य बहुलं गुणो भवति ।

प्र बाहवा पृथुपाणिः सिसर्ति । ऋ० २।३८।२ ॥ प्र बाहवा सिसृतं जीवसे नः । तै० स० १।८।२२ ॥ बाहुनेति प्राप्ते ॥ नात्र प्रशब्दः समस्तः । स्वरभेददर्शनात् । पदकारैर्विच्छिद्य पाठाच्च । न च भवति । उत पव्या रथानामद्रिं भिंदंत्योजसा । ऋ० ५।५२।९ ॥ पविनेति प्राप्ते ।

आचीति किम् । तं मरुतः क्षुरपविना व्ययुः । नि० नै० ५ ॥ ऋतुना यज्ञमाशाथे । ऋ० १।१५।६ ॥ नाम्यन्तस्येति किम् । नाम्युपधस्य माभूत् । उभा देवा दिविस्पृशा ।

## इदुत्कार्य्यं जसादिषु ॥ १८

जसादिषु परतो बहुलमिदुत्कार्य्यं भवति । ह्रस्वमिकार-

मुकारस्याश्रित्य यत् कार्य्यं विहितं तदिदुत्कार्य्यमिष्टाभिप्रेतम्।

अथा शतक्रत्वो यूयं। ऋ० १०।९७।२॥ शतक्रतव: इति प्राप्ते। पश्वे नृभ्योयथा गवे। ऋ० १।४३।२॥ पशवे इति प्राप्ते। अर्यः पुष्टानि स जनास इंद्रः। ऋ० २।१२।४॥ सो अर्यः पुष्टीर्विज इवामिनाति। ऋ० २।१२।५॥ अरेरिति प्राप्ते। पश्वा यत्पश्चावियुता बुधंत। ऋ० १०।६१।१२॥ पशुनेति प्राप्ते। भवति च। शतक्रतव:। पशवे। चतुस्पदे च पशवे। ऋ० ३।६२।१४॥ त्वां यदग्ने पशव: समासते। ऋ० ३।९।९।७॥ किकिदीव्या। भा०। इति त्वाचि गुणाभावे सिद्धम्।

भाष्ये तु, जसादिष्वनेकत्र च्छन्दसि वावचनमभिधाय, अम्बे दर्वि शतक्रत्व: पश्वे किकिदीव्या इति प्रयोजनमुपसंख्याय, अम्बे अम्ब दर्वे दर्वि शतक्रत्व: शतक्रतव: पश्वे पशवे किकिदीव्या किकिदीविनेत्युदाहृतम्। चाषेण किकिदीविना। ऋ० १०।९७।१३॥

## लोपो नोर्नामिनोनपुंसके॥ १९

नपुंसकलिङ्गे नामिन: परस्य न्वागमस्य बहुलं लोपोभवति।

मध्वा यज्ञं मिमिक्षति। ऋ० १।१४२।३॥ मध्वा देवाओषधी: सं पिपृक्त। ऋ० ३।५४।२१॥ मध्वोरसं सुगभस्ति-

गिरिष्ठां । ऋ० ५।४३।४ ॥ अस्य मध्वः पिबत मादयध्वं । ऋ० ७।३८।८ ॥ न च भवति । यो अद्रजन्मधुना सं मधूनि । ऋ० १०।५४।६ ॥ स्रोतंति धारा मधुनो घृतस्य । ऋ० ३।१।८ ॥ क्रतुं रिहंति मध्वाभ्यंजते । सा० छ० ६।२।२।११ ॥ इति छन्दोगाः । क्रतुं रिहंति मधुनाभ्यंजते । ऋ० ९।८६।४३ ॥ इति बह्वृचाः ।

नामिन इति किम् । संते पयांसि समु यंतु वाजाः । ऋ० १।९१।९८ ॥ नपुंसक इति किम् । अग्निनेंद्रेण वरुणेन विष्णुना । ऋ० ८।३।३५।१ ॥

## नेश्च पदान्तस्य ॥ २०

नपुंसकलिङ्गे जस्शसोः शौ यो नुरागमो भवति तदुभयस्य नेरिति निर्देशः । नेश्च पदान्तस्य बहुलं लोपो भवति । पदकार्य्ये कृते लोपो यथा स्यादिति पदान्तग्रहणम् । अत एवारम्भः ।

या ते गात्राणामृतुथा कृणोमि ताता पिंडानां प्रजुहोम्यग्नौ । ऋ० १।१६२।१९ ॥ यानि तानीति प्राप्ते । अच्छिद्रा गात्रा वयुना कृणोत । ऋ० १।१६२।१८ ॥ अच्छिद्राणि गात्राणीति प्राप्ते । अग्ने त्री ते वाजिना त्री षधस्था । ऋ० ३।२०।२ ॥ त्रीणीति प्राप्ते । मा हिंस्यात् सर्व्वा भूतानि । ति० । सर्व्वाणीति प्राप्ते । न च भवति । यथाऽस्तैव भूतानीति । तथा । छिद्रा गात्राण्यसिना मिथू कः । ऋ० १।१६२।२० ॥

मा त्वत्क्षेत्राण्यरणानि गन्म । ऋ० ६।६१।१४ ॥ यानि क्षेत्राणि या वना । अथ० १४।७।७ ॥ यानि वनानीति प्राप्ते ।

कथं, तिस्रः क्षपस्त्रिरहातिव्रजद्भिः । ऋ० १।१२६।४ ॥ अहानीति प्राप्नोति । डादेशात् सिद्धम् । अन्यत्रापि यथायथं सिध्यतीति चेत्, तर्हि सुखार्थमेवेदम् । एवमन्यत्रापि ।

## ओषधेर्दीर्घोऽप्रथमायाम् ॥ २१

विभक्तावप्रथमायां परभूतायामोषधिशब्दस्य दीर्घो भवति । अर्थादन्तस्य ।

ओषधीभिरपीपतत् । का० । सद्योजात ओषधीभिर्ववक्षे । ऋ० ३।५।८ । यदासिंचा ओषधीभिः पुनीतात् । ऋ० १०। ३०।५ ॥ नमः पृथिव्यै नम ओषधीभ्यः । का० । त्वं वनेभ्यस्त्व-मोषधीभ्यः । ऋ० २।१।१ ॥ पयो गोष्वदधा ओषधीषु । ऋ० ऋ० १०।७३।९ ॥ इतश्च ङीवर्जिताद्‌ङीप्रत्यये कृते छन्तोदात्तता स्यात् । पठ्यते त्वाद्युदात्त इति ।

तथा । अन्नाय एवौषधीभ्यो वर्षत्यथो अन्नाय एवौषधीभ्यो-वृष्टिं निनयति । तै० स० २।४।९ ॥ ओषधीभ्यो वेहतमालभेत प्रजाकामः । तै० स० २।१।५ ॥

ओषधेरिति किम् । त्वं नो अग्ने अग्निभिः । ऋ० १०।१४१। ६ ॥ अप्रथमायामिति किम् । रथीयंतीव प्र जिहीत ओषधिः । ऋ० १।१६६।५ ॥ पयस्वतीरोषधयः । ऋ० १०।१७।१४ ॥ दिव ओषधयस्परि । ऋ० १०।९७।१७ ॥ ओषधयः सं वदंते ।

ऋ० १०।९७।२२ ॥ कथं, स त्वां विश्वन्त्वोषधीरुतापः । भा० ८।२५ ॥ या ओषधीः पूर्व्वा जाताः । ऋ० १०।९७।१ ॥ जसोऽकारलोपः पूर्व्वस्य च दीर्घः । बहुलाधिकारादमि न स्यात् । यत् संपिंषंत्योषधिं । ऋ० १०।८५।३ ॥ इमां खनाम्योषधिं । ऋ० १०।१४५।१ ॥ विभक्तावित्येव । ओषधिपते । का० ।

## विभाषा नामि नामिनः ॥ २२

नकारयुक्ते आमि परतो नामिनो दीर्घो विभाष्यते ।

तिसृणां मध्यन्दिने । तिसृणां मध्यन्दिने । चतसृणां मध्यन्दिने । चतसृणां मध्यन्दिने । का० । तिसृणां सप्ततीनां श्यावः प्रणेता । ऋ० ८।१९।३७ ॥ धाता धातॄणां भुवनस्य यस्पतिः । ऋ० ३०।१२८।७ ॥ इति बह्वृचाः । धाता धातृणां । इति तैत्तिरीयाः । तथा, देवानां त्वा पितृणां । तै० आ० ४।८ ॥

नामीति किम् । अग्ने विश्वेभिरग्निभिः । ऋ० ३।२४। ४ ॥ नकारयुक्ते इत्येव । कमृत्विजामष्टमं शूरमाहुः । ऋ० १०।११४।९ ॥ आमीत्येव । अग्निनाग्निः समिध्यते । ऋ० १।१२।६ ॥ नामिन इति किम् । देवानामुशतीरुप । ऋ० १।२२। ९ ॥ नित्यं स्यात् । उभयत्र विभाषेयम् ।

## तेस्त्रयः ॥ २३

नकारयुक्ते आमि परतस्त्रिशब्दस्य स्थाने त्रयादेशोविभाष्यते । सा वा एषा त्रयाणामेवावरुद्धा संवत्सरसदः सहस्र-

याजिनोऽष्टकमेधिनः। तै॰ स॰ ३।४।३ ॥ त्रयाणां ह वै हविषां स्विष्टकृतेन समवद्यन्ति सोमस्य घर्मस्य वाजिनस्येति। ऐ॰ ब्रा॰ १।४।५ ॥ त्रीणामपि समुद्राणाम्। का॰। मह्नि त्रीणामवोऽस्तु। ऋ॰ १०।१८५।१ ॥ कथं, विद्मा ते अग्ने त्रेधा त्रयाणि। ऋ॰ १०।४५।२ ॥ त्रयः प्रकृत्यन्तरम्। त्रेस्तु, त्रीणि पदा वि चक्रमे। ऋ॰ १।२२।१८ ॥ इति। व्यवस्थितविभाषेयम्।

## अमि पन्थः पन्थे र्बहुलं न चालोपः ॥ २४

अमि परतः पन्थीतीयतस्य शब्दस्य स्थाने पन्थेत्ययमादेशो बहुलं भवति। अकारस्तु न लुप्यते।

सूर्याय पन्थामन्वेतवा उ। ऋ॰ १।२४।८ ॥ त्वं रजिष्ठमनु नेषि पन्थां। ऋ॰ १।९१।१ ॥ आ देवानामपि पन्थामगन्म। ऋ॰ १०।२।३ ॥ समानं पन्थामवथो घृतेन। तै॰ आ॰२।६ ॥ न च भवति। पन्थानं भूष्यां। मा॰ २५।१ ॥

अमीति किम्। आदित्या ऋजुना पथा। ऋ॰ १।४१।५ ॥

## पथि च जसि ॥ २५

पथीति लुप्तविभक्तिकं पदम्। जसि परतः पन्थीतीयतस्य शब्दस्य स्थाने पथीत्ययमादेशोबहुलं भवति। चकारात् पन्थश्च।

ये चत्वारः पथयोदेवयानाः। न्या॰ भा॰ ४।१।६१ ॥ पन्थासोयंति शवसापरीताः। ऋ॰ १।१००।३ ॥ ये ते पन्था अधो दिवः। सा॰ छ॰ २।२।३।८॥ न च भवति। ये पन्थानो बहवोदेवयानाः।

अथ ६।५५।१॥ न तत्र रथा न रथयोगा न पन्थानः । बृ० उ० ३।१० ॥ अनृक्षरा ऋजवः संतु पन्थाः । ऋ० १०।८५।२३॥ इति बह्वृचाः । अनृक्षरा ऋजवः सन्तु पन्थानः । अथ० १४।४।२४ ॥ इत्याथर्वणिकाः ।

जसीति किम् । दिवि पन्थाश्चराचरः । ऋ० १०।८५।११॥ सुगः पन्था अनृक्षरः । ऋ० १।४१।४॥

## आमि च ॥ २६

आमि परतः पन्थीतिएतस्य शब्दस्य स्थाने पथीत्ययमादेशोबहुलं भवति ।

विद्वान् पथीनामुर्वंऽतरिक्षं । ऋ० ५।१।११ ॥ न च भवति । पप्रथे पथामजनिष्ट पूषा । ऋ० १०।१७।६ ॥

आमीति किम् । सुगान् पथः कृणुहि देवयानान् । ऋ० १०।५१।५ ॥

## अन्नस्थ्यादीनाम् ॥ २७

अस्थ्यादीनां बहुलमन् भवति । अर्थादन्तस्य ।

टादौ विहितमटादावपि भवति । अस्थान्युत्कृत्य जुहोति । का० । वि सक्थानि नरोयमुः । ऋ० ५।६१।२ ॥ टादौ स्वरे विहितं व्यञ्जनेऽपि भवति । इंद्रोदधीचो अस्थभिः । ऋ० १।८४।१३ ॥ अस्थभ्यः स्वाहा । मा० ३९।१० ॥ भद्रं पश्येमाक्षभिर्यजत्राः । ऋ० १।८९।८ ॥ विभक्तौ विहितमविभक्तावपि

भवति। अस्थन्वंतं यदनस्था बिभर्त्ति। ऋ० १।१६४।४॥ अच्छिद्रस्य दधन्वतः सुपूर्णस्य दधन्वतः। ऋ०। ६।४८।१८॥ अक्षन्वंतः कर्णवंतः सखायः। ऋ० १०।७१।७॥ पश्यदक्षण्वान्न वि चेतदंधः। ऋ० १।१६४।१६॥ कथं, गोपा नेममाविरस्था कृणोति। ऋ० १०।४८।१०॥ अंतरा सक्थ्या३कपृत्। ऋ० १०।८६।१६॥ पूर्व्वत्र तृतीयैकवचनस्य डा उत्तरत्र द्वितीया-द्विवचनस्य ड्या।

## द्विवाचिष्वी ॥ २८

द्विवाचिषु परतोऽस्थ्यादीनामीकारोऽन्तादेशो भवति।

अक्षीभ्यां ते नासिकाभ्यां। ऋ० १०।१६३।१॥ तेजो वा-एतदक्ष्योर्यदाञ्जनं। ऐ० ब्रा० १।१।३॥ कथं, यो अक्ष्यौ परि-सर्पति। अथ० ५।२३।३॥ अक्ष्यौ नौ मधुसंकाशे। अथ० ७।३६।१॥ वाङ्क्षाक्ष्यौ३वाङ्क्ष सक्थ्यौ। अथ० ६।६।१॥ पुंवद्भावा-न्नौरीम्।

इहापवाद ईकारादेशः उत्सर्गं न्वागममनं च बाधित्वा प्रथमतः प्रवर्त्तते बाधितोन्वागमः पश्चादपि न भवति। न्वागमे त्वादौ कृते न स्युरस्थ्यादीनि द्विवाच्युपश्लिष्टानि। तेन, अक्षी ते इन्द्र पिङ्गले। भा०। दिवो यदक्षी अमृता अकृण्वन्। ऋ० १।७२।१०॥ अक्षी इव चक्षुषा यातमर्वाक्। ऋ० २।३९।५॥ गुहा शिरो निहितमृधगक्षी। ऋ० १०।७९।२॥ इत्यादयोऽप्यनु-

सर्त्तव्या: । अपवादविषयेऽप्युत्सर्गस्य प्रवृत्तेर्वा । भाष्यस्थित्या लक्ष्यैवोदाहरणान्येतानि ।

## अक्ष्णाश्चाक्षिशब्दस्य ॥ २९

द्विवाचिषु परतोऽक्षिशब्दस्य स्थाने अक्ष्णेत्ययमादेशो बहुलं भवति ।

अक्ष्णयोः क्षिपणेरिव । तै० आ० १।४ ॥ न च भवति । तेजोवा एवदक्ष्योर्यदाञ्जनं । कथं, यदक्ष्णात् कुरुते पापं तदक्ष्णात् प्रति मुच्यते । यद्राचियात् कुरुते पापं तद्राचियात् प्रति-मुच्यते । तै० आ० । सर्व्वत्र तृतीयैकवचनस्यात् । पूर्व्वत्रानो-ऽलोप: परत्र तन्वादित्वादियः । मधुषादिप्रपञ्चार्थमिदम् ।

## पुंवन्नपुंसकस्य ॥ ३०

द्विवाचिष्विति निवृत्तम् । नपुंसकलिङ्गस्य बहुलं पुंवद्भावो भवति ।

मधोर्गृभ्णामि । भा० । मधोस्तृप्ता इवासते । भा० । मधो-र्मदाय मरुत: समन्यव: । ऋ० २।३४।५ ॥ सोम्ये मधौ स्वाहेह मादयाध्वै । ऋ० ७।५९।६ ॥ न च भवति । पृचंतीर्मधुना पय: । ऋ० १।२३।१६ ॥ उत प्रियं मधुने युंजाथां रथं । ऋ० ४।४५।२ ॥ स्रोतंति धारा मधुनो घृतस्य । ऋ० ३।१।८ ॥ कथं, मध्वो रसं सुगभस्तिर्गिरिष्ठां । ऋ० ५।४३।४ ॥ तन्वादित्वाद्व: ।

## नदीकारात् सेः ॥ ३१

नदीसंज्ञकेकारात् परस्य सेर्बहुलं लोपो भवति ।

येनानुक्तं मानुषो भोजते विट् । ऋ० १।७२।८ ॥ न च भवति । यमीर्यमस्य बिभृयादजामि । ऋ० १०।१०।९ ॥ मा वां वृको मा वृकीरादधार्षीत् । ऋ० १।१८३।४ ॥ वेदभाष्य-कारास्तत्र वचनव्यत्ययमाहुः । तेषां नेदमुदाहरणम् । गौरी मिमाय सलिलानि तक्षती । तै आ० १।१० ॥ इति तैत्तिरीयाः । गौरीर्मिमाय सलिलानि तक्षती । ऋ० १।१६४।४१ ॥ इति

नदीति किम् । दक्षिणावान् ग्रामणीरग्रमेति । ऋ० १०। १०७।५ ॥ ईकारादिति किम् । भद्रा वधूर्भवति यत्सुपेशाः । ऋ० १०।२७।१२ ॥ सेरिति किम् । यच्छल्मली भवति यन्नदीषु । ऋ० ७।५०।३ ॥

## अम्शसोरादेर्नद्याः ॥ ३२

नदीसंज्ञकात् परयोरम्शसोरादेर्बहुलं लोपो भवति ।

यो वः शमीं शशमानस्य निंदात् । ऋ० ५।४२।१०॥ ऋषे जनित्रीर्भुवनस्य पत्नीरपो वंदस्व सवृधः सयोनीः । ऋ० । १०।३०। १०॥ न च भवति । यमस्य मा यम्यं काम आगन् । ऋ० १०। १५।७॥ सूर्म्यं सुषिरामिव । ऋ० ८।६९।१२ ॥ ते अन्यामन्यां नद्यं सनिष्णत । ऋ० १।१३१।५॥ राजा समुद्रं नद्योऽवि गाहते । ऋ० ९।८६।८ ॥ नद्यो अजिन्वदद्रुहः । ऋ० ९।९।४ ॥ भोजा जिग्युर-

वध्वं१ या सुवासाः । ऋ० १०।१०७।९ ॥ अपां गर्भः प्रस्व-१ आ विवेश । ऋ० ७।९।३॥ श्मश्रीं च श्मश्र्यं च । गौरीं च गौर्यं च । किशोरीं च किशोर्यं च । भा० ॥

अम्शसोरिति किम् । वव्रेण खान्यतृणन्नदीनां । ऋ० २।१५।३ ॥ नद्या इति किम् । मितं भगभदितिं नूनमश्याः । ऋ० ५।४२।१ ॥

## आसोऽम् ॥ ३३

नद्याः परस्यासो बहुलमसादेशो भवति ।

उपह्वरे नद्योअंशुमत्याः । ऋ० ८।९६।१४ ॥ आ काम-मृणे वध्वः । ऋ० ५।७४।५ ॥ पतिर्यद्वध्वो३वाससा स्वमंगमभिधि-त्सते । ऋ० १०।८५।३० ॥ न च भवति । सं भूम्या अंता ध्वसिरा अदृक्षत । ऋ० ७।८३।३॥ जनिता दिवो जनिता पृथिव्याः । ऋ० ८।३६।४॥ एवमन्यत्रापि ।

आस इति किम् । अव स्मयंत विद्युतः पृथिव्यां । ऋ० १।१६८।८॥ कथं, दिवस्त्वा परस्यायाः । प्राणस्य त्वा परस्यायै । तै० आ० ४।११ ॥ परस्या प्रकृत्यन्तरम् । मधुषादित्वाद्वा । नद्या इत्येव । रथं देवासो अभि विक्षु वाजयुं । ऋ० ३।२१।२ ॥

## भूसुधियोर्यवावियुवौ च स्वरे ॥ ३४

विभक्तिस्वरे परतो भू सुधी इत्येतयोर्यवावियुवौ च भवतः । चान्तरतम्यात् । यवार्थमारम्भः । इयुवौ चेत्युत्तरार्थमिहार्थञ्च ।

वनेषु 'चित्रं विभ्वं' विशेविशे । ऋ० ४।७।१। विभुवं वा । अयुद्धसेनोविभ्वा विभिंदता । ऋ० १०।१३८।५ ॥ विभुवा वा । विभवो- महांतो मह्ना विभ्वो३ विभूतयः । ऋ० १।१६६।११ ॥ विभवो- वा । उक्थवाहसे विभ्वे मनीषां । ऋ० ८।९६।११ ॥ तं त्वा वयं सुध्यो ३ नव्यमग्ने । ऋ० ६।१।७ ॥ सुधियोवा । कथं, नाना रथं वा विभवो ह्यश्वाः । ऋ० ३।६।९ ॥ विभुः प्रकृत्यन्तरम् । यदा डुविषये क्विप्, तदोदाहरणम् । यदा तु डुस्तदा लक्ष्ये यं यत्नान्तरम् ।

भूसुधियोरिति किम् । स्त्रियो याः पुण्यगंधाः । ऋ० ७।५५।८ ॥ स्वरे इति किम् । माकिर्देवानामप भूरिह स्याः । ऋ० ।१०।११।९ ॥

## बहुलं तन्वादिषु ॥ ३५

तन्वादिषु बहुलं यवावियुवौ च भवतः ।

शूरो यो युत्सु तन्वं परिव्यत । ऋ० २।१७।२ ॥ प्रिया- मिंद्रस्य तन्वमवीवृधत् । ऋ० ९।७३।२ ॥ रक्षोत नस्तन्वो३ अप्रयुच्छन् । ऋ० १०।४।७ ॥ जनयन्मित्रं तन्वे३स्वायै । ऋ० १०।८।४ ॥ तन्वं पुषेम । तनुवं पुषेम । विष्वं पुषेम । विषुवं पुषेम । स्वर्गोलोकः । सुवर्गो लोकः । का० । त्र्यंबकं यजामहे । ऋ० ७।५९।१२ ॥ इति बह्वृचाः । त्रियम्बकं यजा- महे । मा० ३।६० ॥ इति माध्यन्दिनीयाः । यस्यै कनीस्तनुवी-

वीतपृष्ठाः । तै० ब्रा० १।४।८ ॥ ये ते अग्ने शिवे तनुवौ । यास्ते अग्ने शिवास्तनुवः । तै० ब्रा० १।१।७ ॥ घृतेन त्वं तनुवो वर्धयस्व । तै० स० ३।१।४ ॥ इन्द्रवायुवोः पात्र-मसि । तै० स० ३।१।६ ॥ ते सुवर्गाय लोकायाग्निमचिन्वन्त । तै० ब्रा० १।१।२ ॥ सुवर्भानुरासुरः सूर्य्यं तमसा विध्यत् । तै० स० २।१।२ ॥ देवीरापोऽग्रेगुवोऽग्रेपुवः । यज्ञपतिं देवयुवं । मा० १।१२ ॥ तस्मान्नान्वास्ते न संयाजयन्ति पत्नियै गोपीथाय । तै० ब्रा० १।६।८॥ ङेः स्थाने ऐ, पश्वादियः । इन्द्राग्निर्योर्विशाखे । तै० ब्रा० १।५।१ ॥ कथं, तच्चन् धेनुं सबर्दुघां । ऋ० १।२०।३ ॥ सबः प्रज्ञत्यन्तरं क्षीरार्थे । तन्वादिराकृतिगणः ।

## श्रीग्रामण्योर्नुरामि ॥ ३६

आमि परतः श्री ग्रामणी इत्येतयोर्नुरागमो भवति ।

श्रीणामुदारो धरुणो रयीणां । ऋ० १०।४५।५॥ अपि तत्र सूतग्रामणीनां । भा० । यस्मिन् पक्षे नदीवद्भावो नास्ति तत्रस्मिन्नपि नुरागमो यथा स्यादिति श्रीग्रहणम् । ग्रामणी-ग्रहणमसमाहारार्थम् । भाष्ये तु, नदीवद्भावस्य छन्दसि व्यव-स्थितविभाषया सूतग्रामण्योर्द्वन्द्वैकवद्भावेन च सिद्धेः प्रत्या-ख्यातमिदम् ॥

## धियोबहुलम् ॥ ३७

धीशब्दस्य बहुलं नुरागमो भवति । आमि परे । यः किल धीशब्दः प्रज्ञावचनो यश्च कर्मवचनो नैघण्टुके काण्डे पठ्यते, अविशेषात्तयोरुभयोर्विधिरयम् ।

स धीनां योगमिन्वति। ऋ० १।१८।७॥ यंतारं धीना-मुशिजं च वाघतां। ऋ० ३।३।८॥ भुवोऽविता वामदेवस्य धीनां। ऋ० ४।१६।१८॥ धीनामंतः सबर्दुघः। ऋ० ८।१२।७॥ न च भवति। विश्वासामूधः स धियामुदंचनः। ऋ० ५।४४।१३॥

## गोः पादान्ते ॥ ३८

ऋचः पादान्ते वर्त्तमानस्य गोशब्दस्य नुरागमो भवति। आमि परे। ऋचां खलु पादव्यवस्था।

विद्मा हि त्वा सत्पतिं शूर गोनां। ऋ० १०।४७।१॥ शतं कक्षीवाँ असुरस्य गोनां। ऋ० १।१२६।२॥ कक्षीवते शतहिमाय गोनां। ऋ० ८।७४।८॥

पादान्ते इति किम्। गवां शता पृक्षयामेषु पज्रे। ऋ० १।१२२।७॥ यो अश्वानां योगवां गोपतिर्वशी। ऋ० १।१०१।४। कथं, विराजं गोपतिं गवां। १०।१६६।१॥ बहुला-धिकारादियमिष्टसिद्धिरिति॥

## दृक्स्ववस्स्वतवसां सौ ॥ ३९

दृक् स्ववस् स्वतवस् इत्येतेषां नुरागमो भवति। सौ परे। इह दृगिति तदन्तविधिरिष्टः। शतगत्वनिर्देशादुगत्वे सति विधिरयम्।

ईदृङ् चान्यादृङ् चैतादृङ् च प्रतिदृङ् च। तै० स० ४।६।५॥ कीदृङ्ङिंद्रः सरमे का दृशीका। ऋ० १०।१०८।३॥ यो विश्वतः

सुप्रतीकः सदृङ्ङसि। ऋ० १।९४।७॥ सुक्षत्सुपाणिः स्ववाँ ऋतावा। ऋ० ३।५४।१२॥ गिरिर्न यः स्वतवाँ ऋष्व इंद्रः। ऋ० ४।२०।६॥ स्वतवाँश्च प्रघासी च। मा० १७।८५॥

कथं, यादृगेव ददृशे तादृगुच्यते। ऋ० ५।४४।६॥ क्रियाविशेषणत्वात्। मादृक् क्वचन विद्यते। तै० आ० १।५॥ इति स्वरूपग्रहणात्।

एषामिति किम्। स युध्मः सत्वा ऋजकृत् समद्वा। ऋ० ६।१८।२॥ साविति किम्। गिरयो न स्वतवसो रघुष्यदः। ऋ० ऋ० १।६४।७।

## दीर्घः षपूर्व्वस्यानो घुट्यसम्बुद्धौ॥ ४०

असम्बुद्धौ घुटि परतः षपूर्व्वस्यानो बहुलं दीर्घो भवति। अर्थादुपधायाः।

स तक्षाणं तिष्ठन्तमब्रवीत्। स तक्षणं तिष्ठन्तमब्रवीत्। ऋभुक्षाणमिन्द्रं। ऋभुक्षणमिन्द्रं। का०। ऋभुक्षणमृभुं रयिम्। सा० छ० ३।१।१।६॥ उक्षाणं पृश्निमपचंत वीराः। ऋ० १।१६४।४३॥ सिंधोरुच्छ्वासे पतयंतमुक्षणं। सा० छ० ६।२।२।११॥

षपूर्व्वस्येति किम्। पूषा राजानमाघृणिः। ऋ० १।२३।१४॥ अन इति किम्। अग्नी रक्षांसि सेधति। ऋ० १।७९।१२॥ नित्यं स्यात्। घुटीति किम्। घ्नक्ष इंद्र उक्षणः। ऋ० १०।८६।१३॥ अग्ने वशाभिरुक्षभिः। ऋ०

२।७।५ ॥ असम्बुद्धाविति किम् । द्यौष्पिता जनिता सत्य-
मुक्षन् । ऋ० ४।१।१० ॥

## उषसश्च ॥ ४१

उषस् इत्येतस्य बहुलं दीर्घो भवति । अर्थादुपधायाः ।

अवीभात् सूर्यं जनयन् द्यामुषासं । ऋ० १।३२।४ ॥ अवी-
बुधध्वमुशतीरुषासः । ऋ० १।१२४।१२ ॥ रेवद्युच्छंतु सुदिना
उषासः । ऋ० १।१२४।८ ॥ न च भवति । इंद्रं सिषक्तुषसं
न सूर्यः । ऋ० १।५६।४ ॥ संहितायामेवायं दीर्घः । ह्रस्वमेव
त्ववग्रहे पठन्ति ।

## शीर्षन् शिरसः ॥ ४२

शिरःशब्दस्य बहुलं शीर्षन्नादेशो भवति ।

शीर्ष्णो द्यौः समवर्त्तत । ऋ० १०।९०।१४ ॥ शीर्ष्णा
शिरः प्रति दधौ वरूथं । ऋ० १०।२७।१३ ॥ शीर्षन्निंद्रस्य
क्रतवो निरेके । ऋ० ८।९६।३ ॥ यक्ष्मं शीर्षण्यं मस्तिष्कात् ।
ऋ० १०।१६३।१ ॥ न च भवति । मदे सुतस्य शवसा भिन-
च्छिरः । ऋ० १।५२।१० ॥ शिरो अपश्यं पथिभिः सुगेभिः ।
ऋ० १।१६३।६ ॥ उपर्युपरि शिरोहरेत् । अधोधः शिरोहरति ।
तै० आ० १।१।५ ॥ भाष्ये तु शिरःपर्य्यायः शीर्षन्शब्दः प्रकृ-
त्यन्तरं छन्दसि द्रष्टव्य इत्युक्तम् ।

कथं, अर्षभिन्नस्य वरुणस्य धर्मणा । ऋ० ८।१०७।१५ ॥

तानि धर्माणि प्रथमान्यासन् । ऋ० १०।९०।१६ ॥ इत्यादयः ।
नैते धर्मशब्दस्य प्रयोगाः किन्तु धरतेर्मनन्तस्य धर्मन्शब्दस्य ।
यद्देकस्याधिधर्म्मणि । तै० स० १।८।३ ॥ इत्येवमादयोऽप्येते-
नैवोपपादनीयाः ।

## स्नोरन्तयोर्लोपो न चालुप्तवत् ॥ ४३

लिङ्गान्तयोः सकारनकारयोर्बहुलं लोपो भवति । न च
लुप्तौ तावलुप्तवद्भवतः ।

अम्भस्य पारे भुवनस्य मध्ये । तै० आ० १०।१ ॥ चक्षोः
सूर्यो अजायत । ऋ० १०।९०।१३ ॥ हस्तिचर्मे जुहोति ।
का० । ऋषभचर्मेध्यभिषिञ्चति । तै० ब्रा० २।७।२ ॥ ब्रह्म-
सामं भवति । का० । प्रथिष्ट यस्य वीरकर्ममिष्णात् । ऋ०
१०।६१।५ ॥ अजलोमैः सꣳसृजति । तै० आ० ५।२ ॥ द्वा धनुं
बृहतीमप्स्वं१तः । ऋ० १०।२७।१७ ॥ गायत्रं छन्दं । पर-
मात्मं सरूपं । तै० आ० १०।३३ ॥ आत्माय नमः । तै०
आ० १०।१६ ॥

न च भवति । वीतं पातं पयस उस्रियायाः । ऋ० १।१५३।
४ ॥ निधर्म्मणा ऋभवो गामपिंशत । ऋ० १।११०।८ ॥ यस्य
रथन्तरसामा सोमः स्यात् । मी० भा० । ब्रह्मसाम । का० ।
एतानि वा अस्यै देवतानामानि देवतानामैरेवैनामाह्वयति ।
एतानि वा अस्यै मनुष्यनामानि मनुष्यनामैरेवैनामाह्वयति ।
तै० आ० ५।७ ॥ अन्नमनुष्ययोः प्रकृत्यन्तरमायुं नैघण्टुकाः समा-

मनन्ति । वृषा पुनान आयुषु । ऋ० ९।१९।३ ॥ इत्येवमादीनि तस्योदाहरणानि । न त्वायुषः सलोपः । एवं, नमः प्रकृत्यन्तरमन्नार्थं पठ्यते । तस्य, चयद्वीराय नमसा दिदिष्टन । ऋ० १०।९२।९ ॥ इत्यादयः प्रयोगाः । नत्यर्थत्वे त्वास्येयं यत्नान्तरम् ।

## अह्नः सः ॥ ४४

अहन् इत्येतस्य नकारस्य स्थाने बहुलं सकारो भवति । वावृधीथा अहोभिरिव द्यौः । ऋ० १।१३०।१० ॥ अहोभिरद्भिरक्तुभिर्व्यक्तं । ऋ० १०।१४।९ ॥ न च भवति । न वां द्यावोऽहभिर्नोत सिंधवः । ऋ० १।१५१।९ ॥ ईर्मा तस्थुषीरहभिर्दुदुह्रे । ऋ० ५।६२।२ ॥ चकार मह्रीरवनीरहभ्यः । ऋ० ७।८७।१ ॥ प्रास्तुभ्य इंद्रः प्र वृधो अहभ्यः । ऋ० १०।८९।११ ॥

## मासुषःस्ववस्स्वतवसां भे दः ॥ ४५

विभक्तौ भकारे परतो मास् उषस् स्ववस् स्वतवस् इत्येतेषां दो भवति । अर्थादन्तस्य ।

माद्भिः भरद्भिः । सि० । माद्भिरिष्टा इन्द्रो वृत्रहा । भा० । समुषद्भिरजायथाः । ऋ० १। ६।३ ॥ स्ववद्भिः । भा० । अवतेरसुन् । शोभनमवो येषां तैरित्यर्थः । स्वतवद्भिः । भा० । तु इत्यगणपरिपठितो धातुस्तस्मादसुन् । स्वं तवो येषां तैरित्यर्थः ।

एषामिति किम् । होता तमू नमोभिरा कृणुध्वं । ऋ० १।७७।२ ॥ भे इति किम् । दोषा अस्मभ्यमुषसश्च पिन्वतं । ऋ० १।३४।३ ॥ विभक्तावित्येव । कृत्वा चेतिष्ठो विश्वामुषर्भुत् । ऋ० १।६५।५ ॥

## मन्तुवन्सोर्विसृष्टः सम्बुद्धौ ॥ ४६

सम्बुद्धौ परतो मन्तु वन्स् इत्येवमन्तस्य विसर्जनीयो भवति । अर्थादन्तस्य ।

मन्त्वन्तस्य तावत् । इंद्र मरुत्व इह पाहि सोमं । ऋ० ३।५१।७ ॥ यद्वा मरुत्वः परमे सधस्थे । ऋ० १।१०१।८ ॥ मरुतो विद्यन्ते अस्येति मन्तुः । बहुलं वोमन्तो रिति मकारस्य वकारः । संयोगान्तस्य लोपे नकारस्य विसर्गः । तथा । प्र यद्विवो हरिवः प्रातरुग्र । ऋ० १।३३।५ ॥ एतेन गातुं हरिवो विदोनः । ऋ० १।१७३।१३ ॥ विश्वेत्ता ते हरिवः शचीवः । ऋ० १०।४९।११ ॥ हरी विद्येते अस्येति मन्तुः । विश्वा हि माया अंवसि स्वधावः । तै० आ० १।२ ॥ एवमन्यंत्रापि ।

वन्सन्तस्य खल्वपि । चयद्वोरस्य तव रुद्र मीढ्वः । ऋ० १।१४३।२ ॥ मीढ्वस्तोकाय तनयाय मृळ । ऋ० २।३३।१४ ॥ इन्द्र साह्वः । का० । दाश्वान् साह्वान् मीढ्वांश्चेति छान्दसो निपातः ।

मन्तुवन्सोरिति किम् । ब्रह्मन् वीरब्रह्मकृतिं जुषाणः । ऋ० ७।२९।२ ॥ सम्बुद्धाविति किम् । विष्णुरित्था परममस्य विद्वान् । ऋ० १०।१।३ ॥

## वनश्च ॥ ४७

वन इत्युत्सृष्टानुबन्धनिर्देशः क्वनिप्वनिपोरुपसंग्रहार्थः । वनो नकारस्य विसर्जनीयो भवति । सम्बुद्धौ ।

यस्त्वायंतं वसुना प्रातरित्वः । ऋ० १।१२५।२ ॥ अन्येभ्योऽपि दृश्यन्ते इति क्वनिप् । एवमन्यत्रापि ।

## अन्यत्रापि दृश्यते ॥ ४८

अन्यत्रापि नकारस्य विसर्जनीयो दृश्यते ।

विननादाभिधावः । तै० ब्रा० १।३ ॥ अभिधावन्निति प्राप्ते । दृशिग्रहणं प्रयोगानुसारार्थम् ।

## नेत् पावकादिषु ॥ ४९

पावकादिष्विकारो न भवति । के प्रत्यये स्त्रीकृताकारपरे पूर्व्वोऽकारइकारमित्यस्य प्रतिषेधोऽयम् ।

मधुश्चुतः शुचयो याः पावकाः । ऋ० ७।४९।३ ॥ पावका नः सरस्वती । ऋ० १।३।१० ॥ पुनातेः पावयतेर्वा वुण् । स्त्रियामादा । यासु अलोमकाः । का० । इयत्तिका

शकुंतिका सका जघास ते विषं । ऋ० १।१९१।११ ॥ प्रावकादिराकृतिगणः । तस्यैव बहुलाधिकारस्य प्रपञ्चार्थमिदम् ।

## युष्मदोऽम् प्रथमाद्विवचनस्य ॥ ५०

युष्मदः परस्य प्रथमाद्विवचनस्य स्थाने अम् भवति ।

युवं वस्त्राणि पीवसा वसाथे । ऋ०।१।१५२।१ ॥ त्रिर्नोंयं वहतमश्विना युवं । ऋ० १।३४।४ ॥ आ मा गंतां पितरा मातरा युवं । आ० क० । युवामिति प्राप्ते ।

युष्मद इति किम् । ऋतेन यावृतावृधावृतस्य ज्योतिषस्पती । ता मित्रावरुणा हुवे । ऋ० १।२३।५ ॥ प्रथमाद्विवचनस्येति किम् । युवां हवंते अश्विना । ऋ० १।४७।४ ॥

## मधुषादीनि यथाऽऽम्नातम् ॥ ५१ ॥

मधुषादीनि यथैवाम्नातानि तथैव निपातयितव्यानि । मधुषा संयौति । तै० स० २।४।९ ॥ मधुषादिराकृतिगणः ।

इति चान्द्रकान्त्यां कातन्त्रच्छन्दप्रक्रियायां नाम्निचतुष्टये

प्रथमः पादः ।



## व्यत्ययो विभक्तिलिंगवचनानाम् ॥ १

विभक्तिलिङ्गवचनानां बहुलं व्यत्ययो भवति ।

युक्ता मातासीद्धुरि दक्षिणायाः । ऋ० १।१६४।९ ॥ दक्षिणायामिति प्राप्ते इति महाभाष्यम् । वेदभाष्यकाराणान्तु शैषिकीयं षष्ठी । अनृक्षरा ऋजवः संतु पंथाः । ऋ० १०।८५।२३ ॥ इति पथिशब्दस्य पन्थादेशात् सिद्धम् । पन्थान इति प्राप्ते इति पुनः पाणिनीयाः । चक्रन्न क्रंददाध्ये शिवायै ।ऋ० १०।९५।१३ ॥ शिवे इति प्राप्ते विभक्तिलिङ्गयोर्व्यत्ययः । प्रजापतिः प्रथमजा ऋतस्य । तै० आ० १।२३ ॥ प्रथमज इति प्राप्ते । अमी ये सुभगे दिवि विचृतौ नाम तारके । तै० आ० २।६ ॥ अमू इति प्राप्ते । पश्यदक्षण्वान्न विचेतदंधः । ऋ० १।१६४।१६ ॥ पश्यन्निति प्राप्ते । निदहत् पृथिवीं सर्व्वां । तै० आ० १।३ ॥ निदहन्निति प्राप्ते । येनावृतं खञ्च दिवं महीञ्च । अतः परं नान्यदणीयसं हि परात् परं यन्महतो महान्तं । तै० आ० १०।१ ॥ मही इति अणीयः इति महत् इति च प्राप्ते । श्रोत्रं ते चक्रे आस्तां । ऋ० १०।८५।११ ॥ श्रोत्रे इति प्राप्ते । शतं वो अंब धामानि । ऋ० १०।९७।२ ॥ अम्बाः

इति प्राप्ते । अयं देवाय जन्मने । ऋ० १।२०।१ ॥ देवेभ्यो-जन्मभ्य इति प्राप्ते । अनागा मित्रे वरुणे स्वस्तये श्रेष्ठे स्याम सवितुः सवीमनि । ऋ० १०।३६।१२ ॥ अनागस इति प्राप्ते ।

## द्यूतव्यवहारयोर्दिवः कर्म्मणि द्वितीया ब्राह्मणे ॥ २

द्यूतमप्राणिभिः क्रीड़नम् । व्यवहारः क्रयादिः । ब्राह्मणं मन्त्रेतरवेदभागः । द्यूतव्यवहारयोरर्थयोर्वर्त्तमानस्य दीव्यतेः कर्म्मणि द्वितीया भवति । ब्राह्मणविषये प्रयोगे ।

गां प्रदीव्यन्ति । गामस्य तदहः सभायां दीव्येयुः । भा० । प्रष्टौहीं दीव्यति । मी० भा० । कथं, अक्षैर्दीव्यति शौनः-शेपमाख्यापयति । मी० भा० । करणे तृतीया । दिवस्तद-र्थस्य कर्म्मणि साधकतमादन्यत्र षष्ठीमिच्छन्ति, तद्बाधनार्थोऽयं योगः ।

## तृतीया जुहोतेरन्यतरस्याम् ॥ ३

जुहोतेः कर्म्मणि तृतीया भवति वा ।

जर्त्तिलयवाग्वा जुहोति । गवेधुकयवाग्वा जुहोति । सक्तून् जुहोति । मी० भा० । यवाग्वाऽग्निहोत्रं जुहोति । यवागूमग्निहोत्रं जुहोति । भा० । अग्निहोत्रशब्दोऽत्र हवि-र्वचनः । अग्नये हूयते इति व्युत्पत्तेः । यस्याग्निहोत्रमधि-श्रितमित्यादि प्रयोगाच्च । हविः खल्वधिश्रीयते । यवागूश्चात्र हविः । तत्र कर्म्मणि तृतीया । यवाग्वाख्यं हविर्जुहोतीत्यर्थः ।

भाष्ये तु प्रत्याख्यातमिदम्। अग्निहोत्रशब्दस्य हवि-र्ज्योतिषोर्जुहोतेश्च प्रक्षेपप्रीणात्यर्थयोः प्रयोगात् कर्मकरणयो-र्द्वितीयातृतीयाभ्यामुपपत्तेः। यवाग्वा हविषाऽग्निं प्रीण-यतीत्येकत्र, यवागूं हविरग्नौ प्रक्षिपतीत्यन्यत्रार्थः। अग्नि-होत्रं प्रज्वलितमिति ह्यग्निहोत्रशब्दो ज्योतिरर्थः, अग्निषु हूय-मानेष्विति च जुहोतिः प्रीणात्यर्थो दृश्यते।

प्रेष्यब्रुवोर्हविषाप्रस्थिते षष्ठी देवतासंप्रदाने॥ ४

प्रेष्येति दैवादिकस्येष्यतेः पञ्चमीमध्यपुरुषैकवचनान्तं पदम्। तत्साहचर्य्याद्ब्रुविरपि तद्विषयएव गृह्यते। प्रेष्यब्रुवोरप्रस्थिते हविषि कर्म्मणि षष्ठी विभक्तिर्भवति। देवतासम्प्रदाने विषये।

अग्नये छागस्य हविषो वपाया मेदसः प्रे३ष्य। अग्नये छागस्य हविषो वपाया मेदसोऽनुब्रू३हि। का०।

प्रेष्यब्रुवोरिति किम्। अग्नये छागं हविर्वपां मेदो-जुहुधि। का०। हविषीति किम्। अग्नये गोमयान् प्रेष्य। का०। अप्रस्थिते इति किम्। यत्र प्रस्थितत्वेन हविर्विशि-ष्यते तत्र मा भूत्। इन्द्राग्निभ्यां छागं हविर्वपां मेदः प्रस्थितं प्रे३ष्य। भा०। देवतासंप्रदाने इति किम्। माणव-काय पुरोडाशं प्रेष्य। उभयोर्विभाषयोर्मध्ये विधिर्नित्यः।

## यजेः करणे वा ॥ ५

यजेः करणे षष्ठी विभक्तिर्भवति वा ।

सोमस्य यजते । सोमेन यजते । घृतस्य यजते । घृतेन यजते । का० । यजेरिति किम् । दध्ना जुहोति । मी० भा० । करणे इति किम् । पृषदाज्येनानुयाजान् यजति । मी० भा० ।

## चतुर्थ्यर्थे ॥ ६

चतुर्थ्या अर्थे षष्ठी भवति वा ।

पुरुषमृगचन्द्रमसो गोधाकालका दार्वाघाटास्ते वनस्पतीनां कृकवाकुः सावित्रोहꣳसो वातस्य नाक्रोमकरः कुलीपयस्ते अकूपारस्य ह्रियै शल्यकः । मा० २४।३५ ॥ प्रजापतये च वायवे च गोमृगो वरुणायारण्यो मेषो यमाय कृष्णोमनुष्यराजाय मर्कटः शार्दूलाय रोहिद्वृषभ।य गवयी क्षिप्रश्येनाय वर्त्तिका नीलंगोः कृमिः समुद्राय शिशुमारो हिमवते हस्ती । मा० २४।३० ॥ व्यवस्थितविभाषेयम् ।

## चतुर्थीसप्तम्यौ षष्ठ्यर्थे ॥ ७

षष्ठ्या अर्थे चतुर्थीसप्तम्यौ भवतो वा ।

चतुर्थी तावत् । स पृथिवीमुपासीदद्स्यै ब्रह्महत्यायै तृतीयं परिगृह्णाणेति । तै० स० २।५।१ ॥ यां मलवद्वाससं

सम्भवन्ति यस्ततो जायते सोऽभिशस्तः । यामरण्ये तस्यै स्तेनो यां पराचीं तस्यै ह्रीतमुख्यप्रगल्भो या स्नाति तस्या अप्सुमारुको या अभ्यङ्क्ते तस्यै दुश्चर्मा या प्रलिखते तस्यै खलतिरपमारी याङ्क्ते तस्यै काणो या दतो धावते तस्यै श्यावदन् या नखानि निकृन्तते तस्यै कुनखी या कृणत्ति तस्यै क्लीबो या रज्जुं सृजति तस्या उद्बन्धुको या पर्णेन पिबति तस्या उन्मादुको या खर्व्वेण पिबति तस्यै खर्वः । तै० स० २।५।१ ॥ सर्व्वत्र तस्या इति प्राप्ते । रजस्वलायाः खर्वपानादि-प्रतिषेधार्थवादोऽयम् । अहल्यायै जार । मनाय्यै तन्तुः । भा० १ नवाअरे जायायै कामाय जाया प्रिया भवति । बृ० उ० २।४।५ ॥ तद्रोहिण्यै रोहिणित्वं । तै० ब्रा० १।१।२ ॥

सप्तमी खल्वपि । अनागा मित्रे वरुणे स्वस्तये । ऋ० १०।३६।१२ । मित्रस्य वरुणस्य इति प्राप्ते । षष्ठ्यपि । कस्य नूनं कतमस्यामृतानां मनामहे चारु देवस्य नाम । ऋ० १। २४।१ ॥ न तस्य प्राणा उत्क्रामन्ति । बृ० उ० ४।४।६ ॥ तच्छर्कराणाꣳ शर्करत्वं । तै० ब्रा० १।१।३ ॥ षट्सूत्रीयं प्रपञ्चार्था ।

## पुनर्वसोरेकवचनं नक्षत्रे ॥ ८

नक्षत्रेऽभिधेये पुनर्वसुशब्दादेकवचनं भवति वा । पुनर्वसु-नक्षत्रस्य द्वितारकत्वान्नित्यवत् द्विवचने प्राप्ते पक्षे एकवच-नार्थोऽयमारम्भः ।

पुनर्वसुर्नक्षत्रमदितिर्देवता। का० । ते पुनर्वस्वोरादधत । पुनर्वस्वोरग्निमादधीत । तै० ब्रा० १।१।२ ॥

पुनर्वस्वोरिति किम् । न पूर्व्वयोः फल्गुन्योरग्निमादधीत । उत्तरयोरादधीत । एषा वै प्रथमा रात्रिः संवत्सरस्य यदुत्तरे फल्गुनी । तै० ब्रा० १।१२ ॥ नक्षत्रे इति किम् । अग्नीषोमा पुनर्वसू अस्मे धारयतं रयिं । ऋ० १०।१९।१ ॥ देवार्थे द्विवचनमेव । तथा, पुनर्वसू माणवकौ । का० ।

## विशाखायाश्च ॥ ६

नक्षत्रे अभिधेये विशाखाशब्दादेकवचनं भवति वा ।

विशाखा नक्षत्रमिन्द्राग्नी देवता । विशाखे नक्षत्रमिन्द्राग्नी देवता । का० । भाष्ये तु प्रत्याख्यातमिदं योगद्वयम् । व्यत्ययेन सिद्धेः । प्रपञ्चार्थन्तु भविष्यति । किमिव ह्यत्र व्यत्ययेन प्रत्याख्यातुं न शक्यते ।

इति चान्द्रकान्त्यां कातन्त्रच्छन्दप्रक्रियायां नाम्निचतुष्टये द्वितीयः पादः ।

नाम्नि चतुष्टये तृतीयः पादः ।

## निसः सस्य षस्तपतावपौनःपुन्ये ॥ १

तिपा धातुर्निर्दिश्यते । तपतौ परतो निसः सकारस्य षकारो भवति । अपौनःपुन्येऽर्थे ।

निष्टप्तं रक्षो निष्टप्ता अरातयः । मा० १।७ ॥ सदपि पौनःपुन्यं न विवक्षितमित्येके । नास्त्येव तदित्यपरे । निष्टप्ता शत्रुं पृतनासु सासह्रिः । ऋ० २।२३।११ ॥

निस इति किम् । आदित् सूर्य्यस्तपति तप्यतुर्वृथा । ऋ० २।२४।६ ॥ तपताविति किम् । जाते निःष्ठामदधुर्गोषु वीरान् । ऋ० ३।३१।१० ॥ पूर्व्वपदस्थान्निमित्तादिति षत्वम् । भाषायामपि । निष्टपति सुवर्णम् । सकृत् तपतीत्यर्थः । पौनः-पुन्ये तु, निस्तपति सुवर्णं सुवर्णकारः ।

## ततक्षुस्ततक्षतुस्तुरेषु ॥ २

तुरे अकार उच्चारणार्थः । ततक्षुः ततक्षतुः तुर इत्येतेषु परतो निसः सकारस्य षकारो भवति ।

ततक्षुः । वेनादेकं स्वधया निष्टतक्षुः । ऋ० ४।५८।४ ॥ यतो द्यावापृथिवी निष्टतक्षुः । ऋ० १०।३१।७ ॥ ततक्षतुः । तमोजसे धिषणे निष्टतक्षतुः । ऋ० ८।६१।२ ॥ तुर । प्र व-उग्राय निष्टुरे । ऋ० ८।३२।२७ ॥ ते पुत्र संतु निष्टुरः । ऋ० ८।७७।२ ॥ निःऽतुरे इति निःऽतुरः इति चावग्रहश्छन्दसि ।

एष्विति किम् । यदाशसा निःशसाभिशसा । ऋ० १०।१६४।३ ॥ कथं, निषषह्मानो यमते । ऋ० १।१२७।३ ॥ सहेः षत्वे निसो विसर्गस्य पररूपात् सिद्धम् । निस इत्येव । सप्त मर्यादाः कवयस्ततक्षुः । ऋ० १०।५।६ ॥

## दुसस्तरे ॥ ३

तरे परतो दुसः सकारस्य षकारो भवति ।

अस्मासु यन्मरुतो यच्च दुष्टरं । ऋ० १।१३९।८ ॥
दुस इति किम् । ईजानस्तरति द्विषः । ऋ० ७।५९।२ ॥ तरे इति किम् । ये दुःषहासो वनुषा बृहंतः । ऋ० ९।९१।५ ॥ कथं, न दुष्टुतिर्द्रविणोदेषु शस्यते । ऋ० १।५३।१ ॥ स्तौतेः षत्वे दुसो विसर्गस्य लोपः ।

## नामिनस्तत्तेयुष्मादेशेष्वन्तःपादम् ॥ ४

ते इति तच्छब्दस्य रूपम् । तत् ते युष्मदादेशेषु परतो-नामिनः परस्य सकारस्य षकारो भवति । स चेत् सकार ऋचः पादमध्ये भवति । ऋचामेव पादव्यवस्था ।

तत् । अद्या नकिष्टदा मिनत् । ऋ० ४।३०।२३ । तत् आ मिनत् इति पदकाराः पठन्ति । अग्निष्टच्छोचन्नप बाधतामितः । ऋ० ७।५०।२ ॥ ते । ईयुष्टे ये पूर्व्वतरामपश्यन् । ऋ० १।११३।११ ॥ पुरू ष्टंसेन वावृधुष्ट इंद्रं । ऋ० १०।७३।२ । त्वम् । शुचिष्ट्वमसि प्रियो न मित्रः । ऋ० १।९१।३ ॥ ददिष्ट्वमिंद्रापांसि वाजान् । ऋ० २।१७।८ ॥ त्वा । दधुष्ट्वा भृगवो मानुषेष्वा । ऋ० १।५८।६ ॥ हविष्ट्वा संतं हविषा यजाम । ऋ० १०।१२४।६ ॥ ते । योनिष्ट इंद्र निषदे अकारि । ऋ० १।१०४।१ ॥ स्वादुष्टे अस्तु संसुदे । ऋ० ८।१७।६ ॥ तव । अप्स्वग्ने सधिष्टव । ऋ० ८।४३।९ ॥ न किष्ट्वद्रथीतरः । ऋ० १।८४।६ ॥ इति च ॥

बहुलाधिकारात्, आविस्तत् कृष्व यदसत्त उक्थ्यं१ । ऋ० २।२३।१४ ॥ यद्दत्तविदुस्त इमे समासते । ऋ० १।१६४। ३९ ॥ त्वमग्ने द्युभिस्त्वमाशुशुक्षणिः । ऋ० २।१।१ ॥ त्रिः षष्टिस्त्वा मरुतो वावृधानाः । ऋ० ८।९६।८ ॥ इत्यादयोऽप्यनुसर्त्तव्याः ।

नामिन इति किम् । अश्व्यो वारो अभवस्तदिंद्र । १।३२।१२॥ त्वमपो अजनयस्त्वं गाः । ऋ० १।९१।२२ ॥ ब्रह्माणस्त्वा शतक्रतो । ऋ० १।१०।१ ॥ इंद्र मर्त्यस्तवोतिभिः । ऋ० १। ८३।१ ॥ एष्विति किम् । प्र वाजेभिस्तिरत पुष्यसे नः । ऋ० ७।५७।५ ॥ अन्तःपादमिति किम् । यस्य आत्मनो विदाभूदग्निस्तत् पुनराह जातवेदा विचर्षणिः । सि० । त्वं सोमासि सत्-

पतिस्त्वं राजोत हत्वा । ऋ० १।८१।५॥ तमाविथ सुश्रवसं नवोतिभिस्तव त्रामभिरिंद्र तूर्वयाणं । ऋ० १।५३।१०॥

## यजुष्येकेषाम् ॥ ५

तदादिषु परतो नामिनः परस्य सकारस्य षकारो भवति । यजुषि विषये । एकेषामाचार्य्याणां मतेन । न भवति त्वन्येषामाचार्य्याणां मतेन । इह तूभयोः प्रमाणत्वाद्विकल्पः सिद्धो भवति । यजुषि पादाभावादनन्तःपादार्थं वचनम् ।

अग्निष्टत् । अग्निस्तत् । अर्चिर्भिष्ट्वं । अर्चिर्भिस्त्वं । अग्निष्टे अग्रं । अग्निस्ते अग्रं । का० । अग्निष्टा वसुभिः पुरस्ताद्रोचयतु । तै० आ० ४।६॥

## ततक्षुसि च ॥ ६

यजुषि विषये ततक्षुःशब्दे परतो नामिनः परस्य सकारस्य षकारो भवति । एकेषामाचार्य्याणां मतेन ।

अर्चिर्भिष्टतक्षुः । अर्चिर्भिस्ततक्षुः । का० । चकारादन्योऽप्यस्य विषयो बुभुत्सितव्यः ।

## पूर्व्वपदस्थान्निमित्तात् ॥ ७

यजुषीति न स्मर्य्यते । पूर्व्वं पदं पूर्व्वपदम् । निमित्तं नामिककाररेफाः । पूर्व्वपदस्थान्निमित्तात् परस्य सकारस्य षकारो भवति । एकेषामाचार्य्याणां मतेन ।

द्विषाहस्रं चिन्वीत। त्रिषाहस्रं चिन्वीत। तै० स० ५।२।८॥ मधुष्ठानं। का०। त्रीन् स्तनान् व्रतमुपैत्युपसत्सु त्रिषन्धिर्हीषु-रनीकं शल्यस्तेजनं द्वौ स्तनौ व्रतमुपैत्युपसत्सु द्विषन्धिर्हीषुः शल्यश्च ह्येव तेजनं च। ऐ० ब्रा० १।४।८॥ यदिन्द्राग्नी दिविष्ठः। सि०। सहसः सूनो त्रिषधस्थ हव्यं। ऋ० ५।४।८॥ त्रिष्टुब्-गायत्री च्छन्दांसि। ऋ० १०।१४।१६॥ त्रिऽ सुप् इति पद-काराः पठन्ति। का सुष्टुतिः शवसः सूनुमिंद्रं। ऋ० ४।२४।१॥ उत प्र सरथं सारथये। ऋ० ६।२०।५॥ नक्षिष्ठं वां सूरे दुहितारुहद्रथं। ऋ० १।३४।५॥ प्रजां त्वष्टा वि ष्यतु नाभिमस्मे। ऋ० २।३।६॥ अस्माभिष्टे सुषहाः संतु शत्रवः। ऋ० १०।३८।३॥ उदु ष्य देवः सविता सवाय। ऋ० २।३८।१॥ त्रिः षमृद्धत्वाय। का०। न च भवति। द्विसन्धिः। त्रिसन्धिः। का०। इत्यादि। तथा, त्रिसप्तैः शूर सप्तभिः। ऋ० १।१३३।६॥ त्रिः सौभगत्वं त्रिरुत श्रवांसि। ऋ० १।३४।५।

निमित्तादिति किम्। स पवस्व सहमानः पृतन्यून्। ९।११०।१२॥

## स्तुतस्तोमयोश्च॥ ८

पूर्वपदस्थात् निमित्तात् परस्य स्तुत स्तोम इत्येतयोः सका-रस्य षकारो भवति। एकेषामाचार्य्याणां मतेन।

त्रिभिष्टुतस्य। का०। उदु ष्टुतः समिधा यह्वो अद्यौत्। ऋ०३।५।९॥ अपि ष्टुतः सविता देवो अस्तु। ऋ० ७।३८।३॥

ऋषिष्टुता जरयंतीमघोनी । ऋ० ७।७५।५ ॥ गोष्टोमं षोडशिनं । का० । न च भवति । त्रिभिस्तुतस्य । गोस्तोमं षोडशिनं । का० । यद्दित्सस्सि स्तुतोमघं । ऋ० ४।३२।८ ॥

निमित्तादित्येव । इह सुतः सुतपा बोधि नो वृधे । १०।१००।१ ॥ बह्वृचाः स्तोमे षकारं न कुर्व्वन्ति । शृण्वंतु स्तोमं मरुतः सुदानवः । ऋ० १।४४।१४ ॥ इत्यादि दन्त्यमेवाधीयते । पूर्व्वपदस्थान्निमित्तादित्येव सिद्धे प्रपञ्चार्थमिदम् । एवमुत्तरत्रापि । सर्व्वएव त्वमी योगास्तस्यैवापिशब्दस्य प्रप-

।

## सोर्निपातस्य ॥ ९

पूर्व्वपदस्थान्निमित्तात् परस्य निपातस्य सोः सकारस्य षकारो भवति ।

अभी षु णः सखीनां । ऋ० ४।३१।३ ॥ ऊर्द्ध ऊ षु ण-ऊतये । ऋ० १।३६।१३ ॥ नि षु सीद गणपते गणेषु । ऋ० १०।११२।९ ॥

सोरिति किम् । यं क्रंदसी संयती विह्वयेते । ऋ० २।१२।८ ॥ सं५ यती इति पदकाराः पठन्ति । निपातस्येति किम् । इंद्राय यत्र सवनानि सुन्वे । ऋ० ७।९७।१ ॥ निमित्तादित्येव । तेषां सु शृणुतं हवं । ऋ० १।४७।२ ॥ बहुलाधिकारात्, नव्यमायुः प्र सू तिर । ऋ० १।१०।११ ॥ इत्यादयोऽप्यनुसर्त्तव्याः ।

## सनोतेर्बहुलम् ॥ १०

पूर्व्वपदस्थान्निमित्तात् परस्य सनोतेः सकारस्य बहुलं षकारो भवति ।

गोषा इंद्रो नृषा असि । ऋ० ९।२।१० ॥ गोषा उ अश्वसा असि । ऋ० ९।६१।२० ॥ गोषामश्वेषु सश्चिम । ऋ० ९। १६।२ ॥ यत्र गोषाता धृषितेषु खादिषु । ऋ० १०।३८।१ ॥ उत नो गोषणिं धियं । ऋ० ६।५३।१० ॥ शंसामि गोषणो नपात् । ऋ० ४।३२।२२ ॥ न च भवति । गोसनिं वाचमुदीरयन् । का० ।

निमित्तादित्येव । असना गोषाः शतसा न रंहिः । ऋ० १०।९५।३ ॥ भाष्ये तु, सनोतेरनकारान्तस्यैवेति नियमान्नकारान्तस्य न स्यात्, गोसनिं सिसनीरित्युक्तम् । बह्वृचास्तु, नकारान्तस्यापि षकारं समामनन्ति । तस्मात् यथान्यासमेवास्तु ।

कथं, व्यषीदत् पिता नः । न्यषीदत् पिता नः । अभ्यषीदत् । का० । ब्राह्मणो होतुरवरो निषीदन् । ऋ० १०।८८। १९ ॥ पूर्व्वपदस्थान्निमित्तादिति सिद्धमेव । न च भवति । व्यसीदत् । न्यसीदत् । अभ्यसीदत् । का० । अग्निर्होता न्यसीदद्यजीयान् । ऋ० ५।१।६ ॥ तथा, अभ्यष्टौत् । अभ्यस्तौत् । सि० ।

## ऋतपूतनाभ्यां सहः ॥ ११

ऋतशब्दात् पूतनाशब्दाच्च परस्य सहः सकारस्य षकारो भवति ।

ऋतापाहं । का० । तमग्ने पृतनाषहं । ऋ० ५।२३।२ ॥ पृतनाषाड्मर्त्यः । ऋ० १।१७५।२ ॥ कथं, ऋतीषाहं रयिमस्मासु धत्त । ऋ० १।६४।१५ ॥ पूर्व्वपदस्थान्निमित्तादितेत्व सिद्धम् । सर्व्वएवामी विधयः संहितायामेव प्रवर्त्तन्ते । दन्त्योह्यवगृह्यते सर्व्वत्र ।

## णोनस्यावग्रहाहतः संहितायाम् ॥ १२

अवगृह्यते इत्यवग्रहस्तद्योग्यो भण्यते । अवग्रहयोग्याहकारात् परस्य नकारस्य णकारो भवति । संहितायाम् ।

पन्थामनु प्रविद्वान् पितृयाणं । ऋ० १०।२।७ ॥ त्वं नृभिर्नृमणो देववीतौ । ऋ० ७।१९।४ ॥ तृतीयमप्सु नृमणा अजस्रं । ऋ० १०।४५।१ ॥ अस्मभ्यं नृमणस्यसे । ऋ० ५।३८।४ ॥ पितृऽयानं । नृऽमनः इत्याद्यवगृह्णन्ति । अवग्रहग्रहणं विषयोपलक्षणार्थम् अवगृह्यमाणात् स्यादनवगृह्यमाणान्न स्यात् । पदान्ते ह्यवग्रहो नापदान्ते । संहिताग्रहणञ्च प्रागेवावग्रहात् स्यात् अवग्रहे तु न स्यादित्येवमर्थम् । दन्त्योहि सर्व्वत्रावग्रहे पठ्यते

कथं, अस्मभ्यं नृम्णमाभर । ऋ० ५।३८।४ ॥ अवग्रहेऽपि नृम्णमिति पठ्यते । नृम्णं बलार्थं प्रकृत्यन्तरमामनन्ति नैघण्टुकाः ।

## नसोधातुस्थान्निमित्तात् ॥ १३

निमित्तं रषृवर्णाः । धातुस्थान्निमित्तात् परस्य नसोनकारस्य णकारो भवति ।

शिक्षा णो अस्मिन् पुरुहूत यामनि । ऋ० ७।३२।२६ ॥ शिक्षा ण इंद्र राय आ । ऋ० ८।९२।९ ॥ रक्षा णो ब्रह्मणस्पते । ऋ० १।१८।३ ॥

धातुस्थादिति किम् । सुते दधिष्व नश्चनः । ऋ० १।३।६ । निमित्तादिति किम् । ऊर्ध्वास्तिष्ठा न ऊतये । ऋ० १।३०।६ ॥ नस इति किम् । रक्षा नृन् पाह्यसुर त्वमस्मान् । ऋ० १।१७४।१ ॥

## उरुषुभ्याञ्च ॥ १४

उरु षु इत्येताभ्यां परस्य नसो नकारस्य णकारो भवति ।

उरु णो वाजसातये । ऋ० ५।६४।६ ॥ उरु णो यंधि जीवसे । ऋ० ८।६८।१२ ॥ अभी षु णः सखीनां । ऋ० ४। ३१।३ ॥ ऊर्द्ध ऊषु ण ऊतये । ऋ० १।३६।१३ ॥ उरुणसावसुतृपावुलुम्बलौ । तै० आ० ६।३ ॥

आभ्यामिति किम् । स शक्र उत नः शकत् । ऋ० १।१०। ६ ॥ षु इति कृतषत्वस्य निपातस्य ग्रहणं, न सुपः । तेन, यज्ञं देवेषु नः कवे । ऋ० १।१३।२ ॥ इत्यादौ न भवति । कथं तर्हि, शक्रो यथा सुतेषु णः । ऋ० १।१०।५ ॥ कर्त्तव्योऽत्र यत्नः ।

## पूर्व्वपदस्थाद्बहुलम् ॥ १५

नस इति न स्मर्य्यते । पूर्व्वपदस्थान्निमित्तात् परस्य नकारस्य बहुलं णकारोभवति ।

उत प्र णेष्यभि वत्स्या अस्मान् । ऋ० १।३१।१८ ॥ अस्थूरि णौ गार्हपत्यानि सन्तु । मा० २।२७ ॥ न च भवति । प्र नो-मुञ्चतं वरुणस्य पाशात् । ऋ० ६।७४।४ ॥ रेवतीर्नः सधमादे । ऋ० १।३०।१३ ॥ प्र ण आयूंषि तारिषत् । ऋ० १।२५।१२ ॥ इति बह्वृचाः । छन्दोगास्तु दन्त्यमधीयते । सा० छ० ४।२। २।७ ॥

निमित्तादित्येव । सुगा नः सुपथा कृणु । ऋ० १। ४२।७ ॥ संहितायामेवामी विधयो भवन्ति । न त्ववग्रहे । दन्त्यो ह्यवग्रहे पठ्यते सर्व्वत्र ।

इति चान्द्रकान्त्यां कातन्त्रच्छन्दःप्रक्रियायां नामिचतुष्टये

तृतीयः पादः ।

नाम्नि चतुष्टये चतुर्थः पादः ।

## पदन्तादा स्त्रियामृचि ॥ १

ऋचीत्यभिधेयनिर्देशः । स्त्रियां वर्त्तमानात् पदन्तालिङ्गादा-प्रत्ययो भवति । ऋचि अभिधेयायाम् ।

एकपदा द्विपदा ऋक् । सि० । ऋचीति किम् गौरी-र्मिमाय सलिलानि तक्षत्येकपदी द्विपदी सा चतुष्पदी । अष्टापदी नवपदी बुभूवुषी सहस्राक्षरा परमे व्योमन् । ऋ० १।१६४।४१ ॥ सखा सप्तपदी भव । म० ब्रा० १।२।७ ॥ भाषाया-मपीति मतम् ।

## बहुव्रीहेरुपधालोपिनोऽनन्तादी ॥ २

उपधालोपिनोऽनन्ताद्बहुव्रीहिसमासात् स्त्रियामीप्रत्ययो-भवति ।

गौः पञ्चदाम्नी । एकदाम्नी । द्विदाम्नी । एकमूर्ध्नी । समानमूर्ध्नी । का० । समानमूर्ध्नीरभि लोकमेकम् । तै० स० ४।३।११ ॥ भाषायान्तु संज्ञायां नित्यमन्यत्र विकल्पः ।

## रात्रेरजसि ॥ ३

जस्विषयादन्यत्र रात्रिशब्दात् स्त्रियामीप्रत्ययो भवति । अवसं रात्रीः शरदश्चतस्त्रः । ऋ० १०।९५।१६ ॥ रात्रीभिरस्मा-अहभिर्दशस्येत् । ऋ० १०।१०।९ ॥ रात्र्याश्चिदंधो अतिदेव पश्यसि । ऋ० १।९४।७ ॥ रात्र्यां तमो अदधुर्ज्योतिरहन् । ऋ० १०।६८।११ ॥

रात्रेरिति किम् । वेषंतीरूर्ध्वा नद्यो न आगुः । ऋ० १।१८१।६ ॥ जस्यपि स्यात् । अजसीति किम् । यास्ता-रात्रयः । का० ।

## विभाषा स्यमोः ॥ ४

सौ अमि च परतो रात्रिशब्दात् स्त्रियामीप्रत्ययो भवति वा । प्राप्ते विभाषा ।

आद्रात्री वासस्तनुते सिमस्मै । ऋ० १।११५।४ ॥ रात्री व्यख्यदायती । ऋ० १०।१२७।१ ॥ ततो रात्र्यजायत । ऋ० १०।१९०।१ ॥ ह्वयामि रात्रीं जगतो निवेशनीं । ऋ० १।३५।१ ॥ उत रात्रीमुभयतः परीयसे । ऋ० ५।८१।४ ॥ न च भवति । रात्रिः केतुना जुषतां । मा० २७।२१ ॥ रात्रिं सह्येषित्वा । का० । रात्रेरित्येव । सूर्यो देवीमुषसं रोचमानां । ऋ० १।११५।२ ॥

## भोर्नित्यम् ॥ ५

भु इति डुप्रत्ययान्तस्य ग्रहणम्। स्त्रियां वर्त्तमानाद्भ्वन्ता-ल्लिङ्गान्नित्यमीप्रत्ययो भवति।

विराट् सम्राड्विभ्वीःप्रभ्वीर्बह्वीश्च भूयसीश्च याः। ऋ० १।१८८।५॥ विभ्वी रातिः शतक्रतो। ऋ० ५।३८।१॥

भोरिति किम्। क्विबन्तस्य मा भूत्। स्वयम्भूः। का०।

## बह्वादिभ्यश्च ॥ ६

स्त्रियां वर्त्तमानेभ्यो बहुप्रभृतिभ्यो लिङ्गेभ्यो नित्यमीप्रत्ययो-भवति।

बह्वीषु हित्वा प्रपिबन्। बह्वी नाम ओषधी भवति। का०। बह्वीनां पिता बहुरस्य पुत्रः। मा० २९।४२॥ बह्वीनां गर्भो अपसामुपस्थात्। ऋ० १।९५।४॥ उतो गुणवचनादखर-संयोगोपधादेति विकल्पे प्राप्ते नित्यार्थं वचनम्। बह्वादि-राकृतिगणः।

## दीर्घजिह्वी ॥ ७

दीर्घजिह्वीति स्त्रियामीप्रत्ययान्तं निपात्यते।

आसुरी वै दीर्घजिह्वी देवानां यज्ञवाट्। श०। दीर्घजिह्वी वै देवानां हव्यमलेट्। का०। सखायो दीर्घजिह्वं। ऋ० ९। १०१।१॥

## आग्नीध्रसाधारणाभ्याम् ॥ ८

स्त्रियां वर्त्तमानाभ्यामाभ्यामीप्रत्ययो भवति ।

आग्निध्री । साधारणी । का० । साधारण्येव मरुतो-मिमिक्षुः । ऋ० १।१६७।४ ॥ भाषायाम् । आग्नीध्रा शाला । साधारणा भूमिः । का० ।

## केवलादिभ्यश्च ॥ ९

केवलादिभ्यो लिङ्गेभ्यः स्त्रियामीप्रत्ययो भवति ।

अथो त इंद्रः केवलीर्विशो बलिहृतस्करत् । १०।१७३।६ ॥ केवलेति भाषायाम् । मामकी । का० । मामिकेति भाषा-याम् । मित्रावरुणयोर्भागधेयी । का० । भागधेयेति भाषा-याम् । पापी त्वियम् । का० । अनिषव्यास्तन्वः संतु पापीः । ऋ० १०।१०८।६ । पापा इति भाषायाम् । उतापरीभ्यो मघवा वि जिग्ये । ऋ० १।३२।१३ ॥ अहं जनिभ्यो अपरीषु पुत्रान् । १०।१८३।३ ॥ अपराभ्यः अपरास्विति भाषायाम् । शिवा रुद्रस्य भेषजी । तै० स० ४।५।१० ॥ आप इद्वा उ भेषजीः । ऋ० १०।१३७।६ ॥ भेषजेति भाषायाम् । समानो-मंत्रः समितिः समानी । ऋ० १०।१९१।३ ॥ ता इन्न्वेव समना समानीः । ऋ० ४।५१।९ ॥ समाना इति भाषायाम् । आर्य-कृती । आर्यकृतेति भाषायाम् ।

सुमङ्गलशब्दं केवलादौ पठन्ति । सुमंगलीरियं वधूः । ऋ० १०।८५।३३ ॥ भाष्ये तु, मत्वर्थीयेकारान्ततयैतदुदाहृतम् ।

सुमङ्गली प्रतरणी गृहाणां। अथ १४।९।२६ ॥ इत्येवमाद्यर्थं त्वास्थेयं यत्नान्तरं भाष्यनये। संज्ञायां लोकेऽपि प्रयुज्यन्ते इति मतम्। कथं, सुप्वे: पक्तिं कृणुते केवलेंद्र:। ऋ० ४।२५।६ ॥ केवलीशब्दादमो डा। तथा। दिवश्चरंति भेषजा। ऋ० १०।५९।९ ॥ भेषजानीत्यर्थः। केवलादिराकृतिगणः।

## पुंयोगे मुद्गलादानुश्च ॥ १०

मुद्गलशब्दात् स्त्रियामीप्रत्ययोभवति। आनुश्चागमः। पुंयोगे गम्यमाने।

रथीरभून्मुद्गलानी गविष्टौ। ऋ० १०।१०२।२ ॥ ऋच्छंति ष्मा निष्पदोमुद्गलानीं। ऋ० १०।१०२।६ ॥ उदनुबन्ध आगमस्य लिङ्गम्।

## रश्च बहुलं नस्य ॥ ११

स्त्रियां वर्त्तमानाल्लिङ्गाद्बहुलमीप्रत्ययो भवति। अन्तस्य नकारस्य रेफश्चादिश्यते।

विशो येन गच्छथो यज्वरीर्नरा। ऋ० १०।४१। २ ॥ स्तनाभुजो अशिश्वीः। ऋ० १।१२०।८ ॥ आ धेनवो धुनयंतामशिश्वीः सबर्दुघाः शशया अप्रदुग्धाः। ऋ० ३।५५।१६ ॥ न च भवति। यज्वनीर्विशः। भा०। अशिश्वीमिव मामयं शिश्वुरभिमन्यते। का०।

## असितपलिताभ्यां क्नश्च तस्य ॥ १२

असितपलिताभ्यां स्त्रियामीप्रत्ययो भवति। तकारस्य क्नादेशश्च।

असिक्नीमेति रुशतीमपाजन् । ऋ० १०।३।१ ॥ त्वद्भिया विश आयन्नसिक्नीः । ऋ० ७।५।३ ॥ असिक्न्या मरुद्वृधे वितस्तया । ऋ० १०।७५।५ ॥ असिक्न्यां यजमानो न होता । ऋ० ४।१७।१५ ॥ पलिक्नीरिद्युवतयो भवंति । ऋ० ५।२।४ ॥

भाषायामपि । गतो गणस्तूर्णमसिक्निकानाम् । भा० प्र० । बहुव्रीहौ दासपूर्व्वात् पत्युर्नस्वेत्येके । दासपत्नीरहिगोपा अतिष्ठन् । ऋ० १।३२।११ ॥ भाष्यवार्त्तिकयोस्तु नैतच्चिन्तितम् । स्वरे त्वास्थेयं यत्नान्तरमिति मतम् ।

## ऊङ् कद्र्वादिभ्यः ॥ १३

कद्रुप्रभृतिभ्यः स्त्रियामूङ् प्रत्ययो भवति ।

कद्रूश्च वै सुपर्णी चात्मरूपयोरस्पर्धेताम् । तै० स० ६।१।६ ॥ मा स्म कमण्डलूं शूद्राय दद्यात् । का० । गुग्गूलूः । मधूः । जतूः । पतयालूः । भा० । अपिबत् कद्रुवः सुतं । ऋ० ८।४५।२६ ॥ तन्वादित्वादुव् । नदादिप्रपञ्चार्थं प्रकरणम् ।

इति चान्द्रकान्त्यां कातन्त्रच्छन्दःप्रक्रियायां नाम्निचतुष्टये

चतुर्थः पादः ।

नाम्नि चतुष्टये पञ्चमः पादः ।

## वृत्तौ विभक्त्यलोपो ब्राह्मणाच्छंसिप्रभृतिषु ॥ १

वृत्तिः समासः पदप्रत्ययोगश्च । वृत्तिविषये ब्राह्मणाच्छंसि-प्रभृतिषु विभक्तेरलोपो भवति ।

ब्राह्मणविहितानि शस्त्राणि ब्राह्मणानि, तानि शंसतीति ब्राह्मणाच्छंसी । द्वितीयाबहुवचनस्यात् । व्यत्ययात् द्वितीयार्थे पञ्चमीयमित्येके । ब्रह्मणादादाय शंसतीत्यन्ये । ऋत्विग्विशेषे रूढिः । संज्ञात्वात् लोकेऽपि प्रयुज्यते इति मतम् ।

कृष्णस्याखरेष्ठः । तै० स० १।१।११ ॥ य उ दृचि यज्ञे अध्वरेष्ठाः । ऋ० १०।७७।७ ॥ अप्सु योनिरुत्पत्तिर्यस्य स अप्सु योनिर्वेतसः । अप्सु भवोऽप्सव्यः ।

## दीर्घो देवताद्वन्द्वे बहुलमुत्तरपदे ॥ २

समासान्तपदमुत्तरपदमिति रूढिः । देवतानां द्वन्द्वे उत्तर-पदे परतो बहुलं दीर्घो भवति । अर्थात् पूर्व्वपदस्य ।

इंद्रासोमावहिमपः परिष्ठां । ऋ० ६।७२।३ ॥ अस्मे स इंद्रावरुणावपि ष्यात् । ऋ० ६।६८।६ ॥ इंद्राविष्णू सुतपा वामुरुष्यति । ऋ० १।१५५।२ ॥ यूयं नो मित्रावरुणादिते च स्वस्तिमिंद्रामरुतो दधात । ऋ० २।२९।३ ॥ आ न इंद्राबृह-स्पती । ऋ० ४।४९।३ ॥ इंद्रापूष्णोः प्रियमप्येति पाथः । ऋ० ऋ० १।१६२।२ ॥ यो अग्नीषोमा हविषा सपर्यात् । १।९३।८ ॥ अग्नीपर्जन्याववतं धियं मे । ऋ० ६।५२।१६ ॥ इति च । न च भवति । अग्निवायू । वाय्वग्नी । का० । इन्द्रवायू बृह-स्पतिं । मा० ३३।४५ ॥

देवताद्वन्द्वे इति किम् । विश्वामित्रजमदग्नी दमे । ऋ० १०।१६७।४ ॥ उत्तरपदे इति किम् । उत्तरपदस्य मा भूत् । ह्रस्वस्य दीर्घतेत्यस्य प्रपञ्चार्थं वचनम् ।

## आदग्नेर्विष्णौ ॥ ३

देवताद्वन्द्वे विष्णुशब्दे उत्तरपदे परतोऽग्निशब्दस्याकारो-भवति । अर्थादन्तस्य ।

अग्नाविष्णू मा वामवक्रमिषं । तै० स० १।१।१२ ॥

विष्णाविति किम् । अग्नीषोमाविमानि नः । ऋ० १। ९३।११ ॥

## न वृद्धाव ॥ ४

विष्णुवर्जिते वृतवृद्धावुत्तरपदे परतोऽग्निशब्दस्य दीर्घ आश्च न भवति

आग्निवारुणीमनड्वाहीमालभेत । आग्निमारुतं कर्म क्रियते । का० । द्वन्द्वाविति किम् । अग्नीषोमौ । अविष्णा- विति किम् । आग्नावैष्णवं चरुं निर्वपेत् । तै० ब्रा० १।५।९ ॥

## दिवो द्यावा ॥ ५

उत्तरपदमनुवर्त्तते । देवताद्वन्द्वे उत्तरपदे परतो दिवितीत- स्य स्थाने द्यावेत्ययमादेशो भवति ।

द्यावाक्षामा पृथिवी दर्शतं वपुः । ऋ० १।१२०।२ ॥ द्यावाभूमी शृणुतं रोदसी मे । ऋ० १०।१२।४ ॥ कथं, द्यावा ह क्षामा प्रथमे ऋतेन । ऋ० १०।१२।१ ॥ द्यावेति प्रक्षत्यन्तर- माचक्षते नैरुक्ताः । तस्य भविष्यति । छान्दसो वा व्यत्ययः ।

## दिवस् च पृथिव्याम् ॥ ६

देवताद्वन्द्वे पृथिवीतीतस्मिन्नुत्तरपदे परतो दिवो दिवसि- त्ययमादेशो भवति । चकारात् द्यावा च ।

दिवस्पृथिव्योरवसा मदेम । ऋ० ५।४९।५ ॥ देवैर्द्यावा- पृथिवी प्रावतं नः । ऋ० १।३१।८ ॥ द्यावा चिदस्मै पृथिवी नमेते । ऋ० २।१२।१३ ॥ इत्यादिकं पूर्व्ववत् समाधेयम् ।

## उषासोषसः सर्व्वत्र ॥ ७

देवताद्वन्द्वे पूर्व्वपदे उत्तरपदे च उषस्शब्दस्य स्थाने उषासा इत्ययमादेशो भवति ।

पूर्व्वपदे तावत् । उषासानक्ता पुरुधा विदाने । ऋ० १।१२२।२ ॥ उत्तरपदे खल्वपि । नक्तोषासा सुपेशसा । ऋ० १।१३।७ ॥ नक्तोषासा समनसा विरूपे । ऋ० १।११३।३ ॥ अवग्रहे त्वन्यत्रापीति ह्रस्वः । उषसानक्ता इत्येवमादिष्ववग्रहे पठ्यते ।

## पितरामातरा च द्वन्द्वे ॥ ८

मातापित्रोर्द्वन्द्वे पितरामातरेत्येतन्निपात्यते । चकारान्मातरापितरा च ।

आ मा गन्तां पितरामातरा च । तै० स० १।७।८ ॥ न मातरापितरा नू चिदिष्टौ । ऋ० ४।६।७ ॥ कथं, उदीरय पितरा जार आ भगं । ऋ० १०।११।६ ॥ सदा पुत्रो न मातरा ततंथ । ऋ० १०।१।७ ॥ विभक्तेराचि गुणे सिद्धम् । तत्रापि तर्हि प्रत्येकं विभक्तेराचि गुणे सिध्यति । सत्यमवग्रहे दोषः स्यादिति वचनम् । अवग्रहे ह्येकमेवेदं पदं पठ्यते ।

## पूर्व्ववल्लिंगं हेमन्तशिशिरयोः ॥ ९

हेमन्तशिशिरयोर्द्वन्द्वे पूर्व्ववल्लिङ्गं भवति ।

हेमन्तशिशिरावृतूनां प्रीणामि । तै० स० ३।६।२ ॥ हेमन्तशिशिरावृतू । मा० १०।१४ ॥ भाषायान्तु, दुःखे हेमन्तशिशिरे । का० । इति परवल्लिङ्गतैव ।

## अहोरात्रयोश्च ॥ १०

अहोरात्रयोर्द्वन्द्वे पूर्व्ववल्लिङ्गं भवति ।

अहोरात्रे इदं ब्रूमः । अहोरात्राणीष्टकाः । का० । अहो-

सते पार्श्वे । मा० ३१।२२ ॥ इति माध्यन्दिनीयाः । अहो-रात्राणि विदधत् । ऋ० १०।१९०।२ ॥ इति बह्वृचाः । भाषायान्तु, अहोरात्राविमौ पुण्यौ । का० । इति परवल्लिङ्गतैव । व्यत्ययप्रपञ्चार्थं योगद्वयम् ।

## दीर्घोऽष्टन उत्तरपदे ॥ ११

उत्तरपदे परतोऽष्टन् इत्येतस्य दीर्घो भवति ।

अनुमत्यै पुरोडाशमष्टाकपालं निर्व्वपति । तै० स० १।८।१ ॥ अष्टाहिरण्या दक्षिणा । का० । अष्टापदी नवपदी बुभूवुषी । ऋ० १।१६४।४१ ॥ वाचमष्टापदीमहं । ऋ० ८।७६।१२ ॥ अष्टापदीभिराहुतः । ऋ० २।७।५ ॥ अष्टावंधुरं वहताभितो-रथं । ऋ० १०।५३।७ ॥

अष्टन इति किम् । सावित्रं द्वादशकपालं । मारुतं सप्त-कपालं । द्यावापृथिव्यमेककपालं । तै० स० १।८।२ ॥ उत्तरपदे इति किम् । अष्टावुपभृति तस्मादष्टाशफा । तै० ब्रा० ३।३।५ ॥ अवग्रहेऽपि विधिरयम् । अष्टा इति ह्यवगृह्यते । कथं, सहस्रं मे ददतो अष्टकर्ण्यः । ऋ० १०।६२।७ ॥ तत्र क्वचिदधिकारात् चिह्नस्यैव कर्णे दीर्घः । बहुलाधिकाराद्वा ।

## सुट्कात्पूर्वः चन्द्रे मन्त्रे ॥ १२

चन्द्रशब्दे उत्तरपदे परतो ह्रस्वात् परः सुडागमो भवति ॥ मन्त्रविषये प्रयोगे ।

धूमकेतुः पुरुश्चन्द्रः । ऋ० १।२७।११ ॥ सुश्चंद्रं वर्चां दधिरे सुपेशसं । ऋ० २।३४।१३ ॥ सुश्चन्द्र दस्म विश्पते । उभे सुश्चन्द्र सर्पिषः । तै० स० ४।४।४ ॥ उत्तरप्रतीकं वाजसनेयिनोऽध्यामनन्ति । मा० १५।४३ ॥ हरिश्चन्द्रो मरुद्गणः । सि० ।

ह्रस्वादिति किम् । सूर्य्याचन्द्रमसौ धाता । ऋ० १०।१९०। ३ ॥ सूर्य्याचन्द्रमसाविव । ऋ० ५।५१।१५ । चन्द्र इति किम् । वृत्रहा पुरुचेतनः । ऋ० ६।१६।१९ ॥ उत्तरपदे इत्येव । शुक्रासि चन्द्रासि । तै० स० १।२।५ ॥ शुक्रं ते शुक्रेण क्रीणामि चन्द्रं चन्द्रेण । तै० स० १।२।७ ॥ शुक्रमसि चन्द्रमस्यमृतमसि । मा० ४।१८ ॥ मन्त्रे इति किम् । ब्राह्मणे मा भूत् । सुचन्द्रा पौर्णमासी । का० । संहितायां विधिरयम् । पुरुः चंद्रः इत्येवमादि द्रष्टव्यम् ।

## विभाषा काकवौ पथि कोः ॥ १३

पथिशब्दे उत्तरपदे परतः कुशब्दस्य स्थाने का कव इत्येतावादेशौ भवतो वा । कापथः । कवपथः । कुपथः । का० । अनीषदर्थार्थोऽयमारम्भः ।

## समानस्य सोऽमूर्द्धप्रभृत्युदर्केषु ॥ १४

मूर्द्धन् प्रभृति उदर्कं इत्येतेभ्यो भिन्ने उत्तरपदे परतः समानशब्दस्य स इत्ययमादेशो भवति वा ।

अनुभ्राता सगर्भ्योऽनुसखा सयूथ्यः । मा० ४।२० ॥ समानो गर्भः सगर्भः तत्र भवः सगर्भ्यो भवे यत् । यो न

सनुत्य उत वा जिघत्नु: । ऋ० २।३०।८ ॥ उद्बुध्यध्वं समनस: सखाय: समग्निमिंध्वं बहव: सनीळा: । ऋ० १०।१०१।१ ॥ न च भवति । समानदक्षा अवसे हवंते । ऋ० ७।२६।२ ॥ समानबंधू अमृते अनूची । ऋ० १।११३।२ ॥ समानयोजनो हि वां । ऋ० १।३०।१८ ॥ मंदू समानवर्चसा । ऋ० १।६।७ ॥

अमूर्द्धप्रभृत्युदर्केष्विति किम् । समानमूर्द्धा । समानप्रभृतय: । समानोदर्का: । का० । समानमूर्द्धीरभि लोकमेकं । तै० स० ४।३।११ ॥ व्यवस्थितविभाषेयम् । मूर्द्धादिवर्जनं प्रपञ्चार्थम् ।

## अद्रिर्देवादीनामन्त्यस्वरादेरञ्चतौ ॥ १५

अञ्चतावुत्तरपदे परत: देव सर्व्वनाम विष्वक् इत्येतेषामन्त्यस्वरादेरवयवस्य स्थाने अद्रिरित्ययमादेशो भवति वा ।

देवद्रीचीं नयत देवयंत: । ऋ० ३।६।१ ॥ सा कद्रीची कं स्विदर्धं परागात् । ऋ० १।१६४।१७ ॥ न च भवति । देवोदेवाच्या कृपा । १।१२७।१ ॥ आ विश्वाची विदथ्यामनक्तु । ऋ० ७।४३।३ ॥ स विश्वाचीरभि चष्टे घृताची: । ऋ० १०। १३९।२ ॥ अपोदीचो अप शूराधराच: । ऋ० १०।१३१।१ ॥ इति च । व्यवस्थितविभाषया स्त्रियामेवायं विधि: ।

एषामिति किम् । उदची विश्वे यजते निपातं । ऋ० ४।५६।४ ॥ अञ्चताविति किम् । अचिक्रदत् कलशे देवयूनां ऋ० ८।८६।२४ ॥ कथं, कुमारिदारा । प्रदविदा । का० । अजक्षीरेण जुहोति । तै० । ऊर्णम्रदा युवतिर्दक्षिणा-

वते। ऋ० १०।१८।१० ॥ ऊर्णम्रदा पृथिवीं विश्वधायसं। का०। याकारौ स्त्रीकृतौ ह्रस्वौ क्वचिदिति ह्रस्वः। न च भवति। जगतीच्छन्दः। फाल्गुनीपौर्णमासी। का०। ऊर्णासूत्रेण कवयो वयन्ति। का०। कथं, अज एकपात् पृथिवी समुद्रः। ऋ० ६।५०।१४ ॥ एकशितिपाद्भवति। एकशिति पादभवत्। एकशितिपादमालभेत। तै० स० २।१।२ ॥ समासान्तविधिरनित्य इति।

## समापं देवयजने ॥ १६

समापमिति निपात्यते। देवयजनेऽर्थे। समापं नाम देवयजनं। का०। समीपमन्यत्।

## बहुलं सुभोरुत्वं वन्तुविन्वतिषु ॥ १७

वन्तु विन् वतिषु परतो सुभोरुत्वं कार्य्यं बहुलं भवति।

एष वः स्तोमो मरुतो नमस्वान्। ऋ० १।१७१।२ ॥ नमस्वंत इदुपवाकमीयुः। ऋ० १।१६४।८ ॥ तं घेमित्था नमस्विनः। ऋ० १।३६।७ ॥ नचंति रुद्रा अवसा नमस्विनं। ऋ० १।१६६।२ ॥ मनुष्वदग्ने अंगिरस्वदंगिरः। ऋ० १।३१। १७ ॥ ममत्तु वातो अपां वृषण्वान्। ऋ० १।१२२।३ ॥ वृषण्वंतं बिभ्रती धूर्षु रथं। ऋ० १।१००।१६ ॥ मनस्विनी-मानविघातदक्षमिति च मतम्। भवति च। नभोवत्। सर्पिर्वत्।

## न वृषणो वस्वश्वयोः ॥ १८

वसुशब्दे अश्वशब्दे च परतो वृषन् इत्येतस्य सुभोरुक्तं कार्य्यं न भवति ।

तद्यन् हरी इंद्रवाहा वृषण्वसू । ऋ० १।१११।१ ॥ आद-धर्षद्वृषण्वसू । ऋ० २।४१।८ ॥ वृषणश्वेन मरुतो वृषप्सुना । ऋ० ८।२०।१० । मेनाभवो वृषणश्वस्य सुक्रतो । ऋ० १।५१।१३ ॥

वृषण इति किम् । रथं कमाहुर्द्रवदश्वमाशुं । ऋ० ४। ४३।२ ॥ वस्वश्वयोरिति किम् । वृषच्युता मदासो गातुमाशत । ऋ० ८।६८।७ ॥

## अयस्मयादीनि यथाऽऽम्नातम् ॥ १९

अयस्मयादीनि यथा आम्नातानि तथैव निपात्यन्ते ।

अयस्मयानि पात्राणि । का० । अयस्मयस्तम्भादाम विप्राः । ऋ० ५।३०।१५ ॥ अयस्मये कुम्भे । म० ब्रा० २।४।६ ॥ अयस्मयी पृथिवी । गो० ब्रा० उ० २।७ ॥ ते वा अयस्मयीमिवेमामकुर्व्वत । ऐ० ब्रा० १।४।६ ॥ स सुष्टुभा स ऋक्वता गणेन । ऋ०४। ५०।५ ॥ ऋक्वाणो अग्निमिंधते । ऋ० ३।१३।५ ॥ चवर्गलक्षणं स्यात् वर्गप्रथमलक्षणं न स्यात् । नैनं हिन्वंत्यपि वाजिनेषु । ऋ० १०।७१।५ ॥ वर्गप्रथमलक्षणं स्यात् चवर्गलक्षणं न स्यात् । अयस्मयादिराकृतिगणः ।

## न ऋतः को बहुव्रीहौ ॥ २०

बहुव्रीहौ समासे ऋदन्तात् को न भवति ।

हता माताऽस्य हतमाता । हतपिता । हतस्वसा । का० । हतोहतमाता क्रिमिर्हतभ्राता हतस्वसा । अथ ५।२३।११ ॥ ग्रावाणो न सूरयः सिंधुमातरः । शिशूला न क्रीळयः सुमातरः । ऋ० १०।७८।६ ॥

## बहुप्रजाः ॥ २१

बहुव्रीहौ बहुप्रजा इतीयतन्निपात्यते ।

बहुप्रजा निर्ऋतिमा विवेश । ऋ० १।१६४।३२ ॥ भाषायान्तु बहुप्रजो ब्राह्मणः ।

इति चान्द्रकान्त्यां कातन्त्रच्छन्दःप्रक्रियायां नाम्निचतुष्टये

पञ्चमः पादः ।

## कुलालादिभ्योऽण् ॥ १

कुलालादिभ्योऽण् प्रत्ययो भवति । स्वार्थे ।

कुलाल एव कौलालः । एवं, वारुडः । नैषादः । चाण्डालः । मैत्रः । आमित्रः । कार्म्मारः । तपसे कौलालं । मा० ३०।७॥ ऋच्चीकाभ्यो नैषादं । मा० ३०।८ ॥ वायवे चाण्डालं । मा० ३०।२१ ॥ नासामामित्रो व्यथिरा दधर्षति । ऋ० ६।२८।३ । कार्मारो अश्मभिर्द्युभिः । ऋ० ९।११२।२ ॥ बीभत्सायै पौल्कसं । मा० ३०।१७ ॥ कुलालादिराकृतिगणः ।

## वेशन्तहिमवद्भ्यां भवे ॥ २

सप्तमी समर्थविभक्तिः । सप्तम्यन्ताभ्यां वेशन्तहिमवच्छब्दाभ्यां भवेऽर्थे अण्प्रत्ययो भवति । यतोऽपवादः ।

वैशन्ताभ्यो वैन्दं । मा० ३०।१६ ॥ गणकृतमनित्यमिति न मदादित्वादी । वैशन्तीभ्यः स्वाहा । हैमवतीभ्यः स्वाहा । का० ।

## सप्तनस्तदस्य परिमाणमिति वर्गे ॥ ३

प्रथमान्तात् सप्तन्शब्दादण् प्रत्ययो भवति । तदस्य परिमाणमित्येतस्मिन्नर्थे । यत्तदस्येति, वर्गश्चेत् स भवति ।

सप्त साप्तान्यसृजत् । का० । त्रिरा साप्तानि सुन्वते । ऋ० १। २०।७ ॥ त्रिभिः साप्तेभिरवतं शुभस्पती । ऋ० ८।५९।५ ॥

आदित् साप्तस्य चक्रिरन् । ऋ० ८।५५।५ ॥ कथं, आयवसे वर्द्धते । भा० । त्रयो राज्ञ आयवसस्य जिष्णोः । ऋ० ११।२२।१५ ॥ वन्दस्व मारुतं गणं । ऋ० १।३८।१५ ॥ स्यादेव ॥

## छन्दसः सोऽस्यादिरिति प्रगाथे ॥ ४

छन्दांसि अनुष्टुभादीनि । स इति प्रथमासमर्थात् छन्दोवाचिशब्दात् आदिरस्येतेऽतस्मिन्नर्थेऽण् प्रत्ययो भवति । यत्तदस्येति निर्दिष्टं, प्रगाथश्चेत्तद्भवति ।

अनुष्टुबादिरस्य आनुष्टुभः प्रगाथः । एवं, जागतः । पांक्तः । एवमन्येऽपि । छन्दस इति किम् । उदुत्यशब्द आदिरस्य प्रगाथस्येत्यत्र मा भूत् । प्रगाथे इति किम् । पंक्तिरादिरस्यानुवाकस्येत्यत्र मा भूत् । भाषायामपीति मतम् ।

## स्वार्थे च ॥ ५

छन्दोवाचिशब्दात् स्वार्थे चाण् प्रत्ययो भवति ।

त्रिष्टुबेव त्रैष्टुभम् । एवं, जागतम् । पांक्तमित्यादि । नपुंसका एवामी भवन्ति ।

## दृष्टे साम्न्यास्वरादिलोपश्च बहुलम् ॥ ६

तृतीया समर्थविभक्तिः । तृतीयान्तात्लिङ्गात् दृष्टमित्येतस्मिन्नर्थे अण् प्रत्ययो भवति । यत्तद्दृष्टं, साम चेत्तद्भवति । तस्मिंश्चाणि परतो बहुलमन्त्यस्वरादिरवयवो लुप्यते ।

क्रुश्चेन दृष्टं साम क्रौश्चम्। एवं, वासिष्ठम्। वैश्वामित्रम्। औशनसम्। अन्त्यस्वरादिलोपः खल्वपि। औशनम्।

## अग्निकलिभ्यामेयण्॥ ७

तृतीयान्ताभ्यामग्निकलिशब्दाभ्यां दृष्टं सामेतेतस्मिन्नर्थे एयण् प्रत्ययो भवति।

अग्निना दृष्टं साम आग्नेयम्। एवं, कालेयम्।

## गोत्रादङ्कण्॥ ८

तृतीयान्ताद्गोत्रवाचिशब्दात् दृष्टं सामेतेतस्मिन्नर्थे अकण् प्रत्ययो भवति।

औपगवेन दृष्टं साम औपगवकम्।

## वामदेवाद्यण्॥ ९

तृतीयान्ताद्वामदेवशब्दात् दृष्टं सामेतेतस्मिन्नर्थे यण् प्रत्ययोभवति। वामदेवेन दृष्टं साम वामदेव्यम्।

## तित्तिर्य्यादिभ्यः प्रोक्तस्याध्ययनवेदनयोरीयण् छन्दसि॥ १०

तृतीया समर्थविभक्तिः। तृतीयान्तेभ्यः तित्तिरिप्रभृतिभ्यो-लिङ्गेभ्यः प्रोक्तमधीयते विदन्ति वतेतस्मिन्नर्थे ईयण् प्रत्ययो-भवति। यत्तत् प्रोक्तमिति छन्दश्चेत्तद्भवति।

तित्तिरिणा प्रोक्तमधीयते विदन्ति वा तैत्तिरीयाः । एवं, वारतन्तवीयाः । खाण्डिकीयाः । औखीयाः । कौहलीयाः इति च । छन्दसीति किम् । तित्तिरिणा प्रोक्तं श्लोकमधीयते इत्यत्र मा भूत् ।

## कलाप्यादिभ्योऽण् ब्राह्मणे च ॥ ११

तृतीया समर्थविभक्तिः । तृतीयान्तेभ्यः कलापिप्रभृतिभ्यो-लिङ्गेभ्यः प्रोक्तमधीयते विदन्ति वेत्येतस्मिन्नर्थे अण्प्रत्ययो-भवति । यत् तत् प्रोक्तं, ब्राह्मणं छन्दो वा चेत्तद्भवति ।

कलापिना प्रोक्तमधीयते विदन्ति वा कालापाः । एवं, कौथुमाः । ब्राह्मणग्रहणं ब्राह्मणविशेषप्रतिपत्त्यर्थम् । तेन याज्ञ-वल्क्यादिभ्यो न स्यात् । कलाप्यादिराकृतिगणः ।

## कठादेर्लुक् ॥ १२

कठादेः परस्य प्रोक्तस्याध्ययनवेदनयोरुत्पन्नस्याणो लुग्भवति ।

कठेन प्रोक्तमधीयते विदन्ति वा कठाः । एवं, चरकाः । चरक इति वैशम्पायनस्य नामधेयम् । सर्व्वे चैतदन्तेवासिन-एवंमुच्यन्ते ।

## छगलिनो णेयिन् ॥ १३

तृतीयान्ताच्छगलिशब्दात् प्रोक्तमधीयते विदन्ति वेत्येत-स्मिन्नर्थे णेयिन् प्रत्ययो भवति । छगलिना प्रोक्तमधीयते विदन्ति वा छागलेयिनः ।

## कलापिवैशम्पायनान्तेवासिभ्यो णिन् ॥ १४

कलाप्यन्तेवासिनां वैशम्पायनान्तेवासिनाञ्च वाचका ये शब्दास्तेभ्यस्तृतीयान्तेभ्यः प्रोक्तमधीयते विदन्ति वेत्येतस्मिन्नर्थे णिन्प्रत्ययो भवति। कलाप्यन्तेवासिनश्चत्वारः। हरिद्रुः छगली तुम्बुरुरुलपश्चेति। वैशम्पायनान्तेवासिनो नव। आलम्बिः पलङ्गः कमलः ऋचभः आरुणिः ताण्ड्यः श्यामायनः कठः कलापी चेति। तथा चोक्तम्।

हरिद्रुरेषां प्रथमस्ततश्छगलितुम्बुरू।
उलपेन चतुर्थेन कालापकमिहोच्यते।
आलम्बिश्चरकः प्राचां पलङ्गकमलावुभौ।
ऋचाभारुणिताण्ड्याश्च मध्यमीयास्त्रयोऽपरे।
श्यामायन उदीच्येषु उक्तः कठकलापिनोः।

चरक इति वैशम्पायनान्तेवासीत्यर्थः। तत्र साक्षादन्तेवासिनामिह ग्रहणं, नान्तेवास्यन्तेवासिनाम्। कलापिग्रहणात्। स हि वैशम्पायनान्तेवासी। यद्यन्तेवास्यन्तेवासिनां ग्रहणं स्यात् कलाप्यन्तेवासिनोऽपि वैशम्पायनान्तेवासिन एवेति नार्थः कलापिग्रहणेन।

कलाप्यन्तेवासिभ्यस्तावत्। हरिद्रुणा प्रोक्तमधीयते विदन्ति वा इति हारिद्रविणः। एवं, तौम्बुरविणः। औलपिनः। वैशम्पायनान्तेवासिभ्यः खल्वपि। आलम्बिनः। पालङ्गिनः। कामलिनः। आर्चाभिनः। ताण्डिनः। श्यामायनिनः। एतदेवापवादविनाकृता णिनं प्रयोजयन्ति।

## चिरन्तनेन ब्राह्मणे ॥ १५

चिरन्तनेनेति प्रकृत्यर्थो विशिष्यते। ब्राह्मणे इति च प्रोक्तार्थः। तृतीयान्ताच्चिरन्तनर्षिवाचिनः शब्दात् प्रोक्तमधीयते विदन्ति वेत्येतस्मिन्नर्थे णिन् प्रत्ययो भवति। यत्तत् प्रोक्तमिति, ब्राह्मणञ्चेत्तद्भवति।

शाट्यायनेन प्रोक्तं ब्राह्मणमधीयते विदन्ति वा शाट्यायनिनः। एवं, भाल्लविनः। ऐतरेयिणः।

चिरन्तनेनेति किम्। याज्ञवल्क्येन प्रोक्तं ब्राह्मणमधीयते विदन्ति वेत्यत्र मा भूत्। याज्ञवल्क्यादयो ह्यचिरन्तना इत्याख्यानेषु वार्त्ता।

## शौनकादिभ्यश्छन्दसि ॥ १६

तृतीयान्तेभ्यः शौनकादिभ्योलिङ्गेभ्यः प्रोक्तमधीयते विदन्ति वेत्येतस्मिन्नर्थे णिन् प्रत्ययो भवति। यत्तत् प्रोक्तमिति, छन्दश्चेत्तद्भवति।

शौनकेन प्रोक्तमधीयते विदन्ति वा शौनकिनः। एवं, वाजसनेयिनः। एवमन्येऽपि। शौनकादिराकृतिग ।

## अनुब्राह्मणादिन्नध्ययनवेदनयोः ॥ १७

द्वितीया समर्थविभक्तिः। द्वितीयान्तादनुब्राह्मणशब्दादधीते वेत्तिवेत्येतस्मिन्नर्थे इन् प्रत्ययो भवति। अनुब्राह्मणमधीते वेत्ति वा, अनुब्राह्मणी। अनुब्राह्मणिनौ, अनुब्राह्मणिनः।

## काठादेरकण् प्रोक्ते धर्माम्नाययोः ॥ १८

तृतीया समर्थविभक्तिः। तृतीयान्तात् काठादिशब्दात् प्रोक्तमितीतस्मिन्नर्थे अकण् प्रत्ययो भवति। यत्तत्प्रोक्तमिति, धर्म आम्नायो वा चेत्तद्भवति।

कठेन प्रोक्तं प्रवचनं काठकम्। एवं, कालापकम्। पैप्पलादकम्। काठादिराकृतिगणः।

## आथर्वणिकादस्मिन्नर्थे लोपश्चेकस्य ॥ १९

षष्ठी समर्थविभक्तिः। षष्ठ्यन्तादाथर्वणिकशब्दात् इदमितीतस्मिन्नर्थे अण् प्रत्ययो भवति। तत्सन्नियोगेनेकस्य लोपश्च भवति। यत्तदिदमिति, धर्म आम्नायो वा चेत्तद्भवति।

आथर्वणिकस्यायम्, आथर्वणो धर्म आम्नायो वा। कथं, कौथुमम्। तस्येदमित्यण्। एवमन्येऽपि।

## छन्दोगादिभ्यो यण् ॥ २०

षष्ठ्यन्तेभ्यश्छन्दोगादिशब्देभ्य इदमितीतस्मिन्नर्थे यण्प्रत्ययो भवति। धर्माम्नाययोः।

छन्दोगानामिदं छान्दोग्यम्। धर्म आम्नायो वा। एवं, औक्थिक्यम्। याज्ञिक्यम्। बाह्वृच्यम्। भूयान्त्सौत्रं आम्नाय समाचारः। छन्दःप्रसङ्गादिह व्युत्पादिताः।

## अन्शत्यन्तेभ्यो डिन् परिमाणे ॥ २१

प्रथमा समर्थविभक्तिः । तदन्तविधिरत्रेष्टः । प्रथमान्तेभ्यः अन् शत् अत्यन्तेभ्यः शब्देभ्यो डिन् प्रत्ययो भवति । परिमाणेऽर्थे ।

अन् । पञ्चदशिनोऽर्द्धमासाः । शत् । त्रिंशिनोमासाः । अति । विंशिनोऽङ्गिरसः । सि० ।

## वर्षावसन्तहेमन्तेभ्य इकण् शेषे ॥ २२

तत्र भवस्तत्र जातस्ततो वा आगत इत्येवमादिः शेषः । यथायोगं समर्थविभक्तिः । वर्षादिभ्य इकण् प्रत्ययो भवति । शेषेऽर्थे ।

नभश्च नभस्यश्च वार्षिकावृतू । मधुश्च माधवश्च वासन्तिकावृतू । सहश्च सहस्यश्च हैमन्तिकावृतू । तै० स० ४।४।११॥ एभ्य इति किम् । शुक्रश्च शुचिश्च ग्रैष्मावृतू । तपश्च तपस्यश्च शैशिरावृतू । तै० स० ४।४।११॥ भाषायामपीति मतम् ।

## आविषस्त्यः ॥ २३

आविस् शब्दात् शेषेऽर्थे त्यप्रत्ययो भवति ।

आविष्ट्यो वर्द्धते चारुरासु । ऋ० १।९५।५ ॥ नाविष्ट्यं वसवो-देवहेळनं । ऋ० १०।१००।७ ॥

## अर्हतौ यत् ॥ २४

द्वितीया समर्थविभक्तिः। द्वितीयान्ताल्लिङ्गात् अर्हतीत्ये-तस्मिन्नर्थे यत् प्रत्ययो भवति।

उदक्या वृत्तयः। यूप्यः पलाशः। गर्त्यो देशः। का०। उदकमर्हन्ति यूपमर्हतीत्यादिर्विग्रहः। सादन्यं। सि०। सदन-मर्हतीति यत्। अन्येषामपि दृश्यते इति दीर्घः। विदथ्यं। सि०। विदथो यज्ञः। परिज्मानं विदथ्यं सुवृक्तिभिः। ऋ० १०।४१।१ ॥ अवोचाम कवये मेध्याय। ऋ० ५।१।१२ ॥

## भवे ॥ २५

सप्तमी समर्थविभक्तिः। सप्तम्यन्ताल्लिङ्गाद्भवेऽर्थे यत् प्रत्ययो-भवति।

नमः कूप्याय चावट्याय च नमो वीध्र्याय चातप्याय च। नमो मेघ्याय च नमो विद्युत्याय च नमो वर्ष्याय चावर्ष्याय च। मा० १६।३८ ॥ कूपे भवोऽवटे भव इत्यादि विग्रहः। तथा। समानो गर्भः सगर्भः तत्र भवः सगर्भ्यः। समानो यूथः सयूथस्तत्र भवः सयूथ्यः। नुतं नुतिर्भावे निष्ठा। समानं नुतं सनुतं तत्र भवः सनुत्यः। अनुभ्राता सगर्भ्यः। अनुसखा सयूथ्यः। यो नः सनुत्य उत वा जिघत्नुः। ऋ० २।३०।९ ॥

कथं, पाथोऽन्तरिक्षं तत्र भवः पाथ्यः। स्रोतसि भवः स्रोत्यः। झोरन्त्ययोरिति सलोपे पश्चादवर्णलोपः। सलोपाभावे स्रोतस्यः। तमु त्वा पाथ्यो वृषा। ऋ० ६।१६।१५ ॥ अधो-

अच्छा: सिंधवः स्रोतयाभिः । ऋ०३।३३।९ ॥ नवतिं स्रोतया नव च स्रवंतीः । ऋ०१०।१०४।८ ॥

## नद्यायण् ॥ २६

सप्तम्यन्तान्नदीशब्दाद्भवेऽर्थे यण् प्रत्ययो भवति ।

नद्यां भवो नाद्यः । च नो दधीत नाद्यो गिरो मे । ऋ०२।३५।१ ॥

## दूताद्भागकर्मणोः ॥ २७

विशेषातिदिष्टन्यायेन यतोऽनुवृत्तिः । षष्ठी समर्थविभक्तिः । भागोऽंशः कर्म्म क्रिया । षष्ठ्यन्तादूतशब्दाद्भागे कर्म्मणि चार्थे यत्प्रत्ययो भवति ।

दूतस्य भागो दूत्यः । दूतस्य कर्म्म दूत्यम् । सखा दूत्यं भृगवाणो विवाय । ऋ०१।७१।४ ॥

## अपः संस्कृते ॥ २८

तृतीया समर्थविभक्तिः । तृतीयान्तादप्शब्दात् संस्कृतेऽर्थे यत् प्रत्ययो भवति ।

अग्रेगो राजाप्यस्तविष्यते । ऋ० ९।८६।४५ ॥ अप्यः षुत्यवग्रहे पच्यते । यस्येदमप्यं हविः । ऋ० १०।८६।१२ ॥

## सोमादर्हतौ मयडर्थे च ॥ २९

अर्हतौ द्वितीया समर्थविभक्तिः । प्रस्तुतादयोऽनेके मयडर्थाः । तत्र यथायोगं समर्थविभक्तयः । समर्थविभक्त्यन्तात् सोमशब्दात् अर्हत्यर्थे मयडर्थे च यत् प्रत्ययो भवति ।

सोममर्हन्तीति सोम्या ब्राह्मणाः । सोम्यं मधु पिबन्ति । का० । सोममयमित्यर्थः । अग्रानस्रो नाध्यतनोत सोम्याः । ऋ० १०।५३।७ ॥ सोमार्हाइत्यर्थः । अध्वर्युभिः प्रस्थितं सोम्यं मधु । ऋ० २।३७।२ ॥ मयडर्थे इतीयतावतुक्ते अर्हतौ न स्यादितयाशङ्का-निरासार्थमर्हतिग्रहणम् । पृथङ्निर्देश उत्तरार्थः ।

## मधोः ॥ ३०

मधुशब्दान्मयडर्थे यत् प्रत्ययो भवति ।

मधव्यान् स्तोकान् । का० । मधुमयानितयर्थः । मधव्यः । मधुमय इतयर्थः । यन्मधुनो मधव्यं परमं रूपमन्नाद्यं । तेनाहं मधुनो मधव्येन । य० द० प० ।

## वसोः समूहे च ॥ ३१

यथायोगं समर्थविभक्तिः । वसुशब्दात् समूहेऽर्थे मय-डर्थे च यत् प्रतययो भवति ।

ते नो धांतु वसव्य१मसामि । ऋ० १०।७४।३ ॥ वसुसमूह-मितयर्थः । उभयं ते चीयते वसव्यं । ऋ० २।९।५ ॥ आ नः स्पार्हे भजतना वसव्ये३ । ऋ० ७।५६।२१ ॥ न सूनृता नि यमते वसव्या । ऋ० ७।३७।३ ॥

## बर्हिषोदत्ते ॥ ३२

सप्तमी समर्थविभक्तिः । सप्तम्यन्ताद्बर्हिःशब्दाद्दत्तमितेय-तस्मिन्नर्थे यत् प्रतययो भवति । बर्हिष्येषु निधिषु प्रियेषु । मा० १९।५७ ॥

## रक्षोयातुभ्योहननयाम् ॥ ३३

हन्यतेऽनयेति हननी । षष्ठी समर्थविभक्तिः । षष्ठ्यन्तात् रक्षःशब्दात् यातुशब्दाच्च हननीत्येतस्मिन्नर्थे यत् प्रत्ययो भवति । सूत्रे बहुवचननिर्देशाद्बहुवचनान्तात् यत् । बहुवचनेन स्तुतिवैशिष्ट्यं ज्ञाप्यते ।

रक्षसां हननी रक्षस्या । यातूनां हननी यातव्या । बहूनां रक्षसां यातूनाञ्च हननेन तनूः स्तूयते । या ते अग्ने रक्षस्या तनूः । या ते अग्ने यातव्या तनूः । का० ।

## रेवतीजगतीहविष्याभ्यः प्रशंसने ॥ ३४

प्रशंसनं प्रशंसा । षष्ठी समर्थविभक्तिः । षष्ठ्यन्तेभ्यो रेवती जगती हविष्याशब्देभ्यः प्रशंसनेऽर्थे यत्प्रत्ययो भवति ।

यद्वो रेवती रेवत्यं । यद्वो जगती जगत्यं । यद्वो हविष्या हविष्यं । का० । रयिर्विद्यते अस्या इति रेवती । तस्याः प्रशंसनं रेवत्यम् । जगत्याः प्रशंसनं जगत्यम् । हविषे हिता हविष्या । गवादित्वाद्यत् । तस्याः प्रशंसनं हविष्यम् । यत्प्रत्ययकारलोपे तद्धितानामाकृतिप्रधानत्वाद्यलोपः ।

## तद्वानासामित्युपधानमन्त्रइष्टकासु लुक् च मन्त्वर्थस्य ॥ ३५

निर्देशादेव समर्थविभक्तिः । मन्त्वर्थप्रत्ययान्तात् प्रथमान्ताल्लिङ्गादासामित्येतस्मिन्नर्थे यत्प्रत्ययो भवति । मन्त्वर्थ-

प्रत्ययस्य लुक् च भवति। तद्वानिति योऽयं प्रथमान्तपदेन निर्दिष्ट:, स चेदुपधानमन्त्रो भवति। यास्वासामिति षष्ठ्यन्त-पदेन निर्दिष्टास्ताश्चेदिष्टका भवन्ति। इतिशब्दो विवक्षार्थ:। सत्यप्यनेकपदे केनचिदेव पदेन तद्वानिह मन्त्रो विवक्ष्यते। तद्वानित्यवयवेनावयविनो निर्देश:। प्रत्ययविधिस्तु श्रुतादेव मन्त्वर्थप्रत्ययान्तादवयववाचिशब्दात्। उपधीयते येन तदुपधा-नम्। उपधानं पुनश्चयनम्।

वर्चःशब्दो यस्मिन्मन्त्रेऽस्ति स मन्त्रो वर्चस्वान्। वर्चस्वानुपधा-नमन्त्र आसामिष्टकानामिति यति कृते मन्त्वर्थप्रत्ययस्य लुकि च विहिते वर्चस्या इति पदं निष्पद्यते। तच्च वर्चस्वन्मन्त्रक-रणकोपधाना इष्टका अभिधत्ते। वर्चस्या उपदधाति। का०। एवं, पयस्या उपदधाति। रेतस्या उपदधाति।

तद्वानिति किम्। मन्त्रसमुदायात् प्रत्ययविधिर्मा भूत्। उपधानेति किम्। वर्चस्वानुपस्थानमन्त्र आसामिष्टकानामित्यत्र मा भूत्। मन्त्र इति किम्। अङ्गुलिमानुपधानो हस्त आसा-मिष्टकानामित्यत्र मा भूत्। इष्टकास्विति किम्। वर्च-स्वानुपधानमन्त्र एषां कपालानामित्यत्र मा भूत्।

## अश्विमतोऽण् ॥ ३६

प्रथमा समर्थविभक्ति:। अश्विमच्छब्दात् प्रथमान्तादण् प्रत्ययो भवति। मन्त्वर्थप्रत्ययस्य लुक् च भवति। उपधानमन्त्र-आसामित्यर्थे। यतोऽपवाद:।

अश्विशब्दो यस्मिन् मन्त्रे विद्यते स मन्त्रोऽश्विमान् । अश्विमानुपधानमन्त्र आसामित्यश्विमच्छब्दादणि मन्तोर्लुकि च प्रकृतिभावे वृद्ध्यादौ च कृते आश्विनीति पदं निष्पद्यते । आश्विनीरुपदधाति । का० ।

## वयस्यासु मूर्द्धन्वतो यतोलोपः ॥ ३७

वयस्वानुपधानमन्त्रो यासामिष्टकानां ता वयस्याः । वयस्यास्विष्टकास्वभिधेयासु मूर्द्धन्वच्छब्दाद्विहितस्य यतोलोपोभवति ।

यस्मिन् मन्त्रे वयःशब्दो मूर्द्धशब्दश्चास्ति, स मन्त्रोवयस्वानपि भवति मूर्द्धन्वानपि भवति । मूर्द्धा वयः प्रजापतिश्छन्दः । का० । इत्येवमादिः । तत्र मूर्द्धन्वच्छब्दाद् यतो लोपो विधीयते । यतोग्रहणान्मत्वर्थप्रत्ययस्य लुगिह नेष्यते । मूर्द्धन्वतीरुपदधाति । का० । या एव वयस्यास्ताएव मूर्द्धन्वत्यः ।

वयस्यास्विति किम् । यत्र मन्त्रे मूर्द्धशब्दएव केवलः पठ्यते न वयःशब्दस्तत्र मा भूत् । मूर्द्धन्वत इति किम् । वयस्यायां यतो लोपो मा भूत् ।

## असुरादिदमर्थे ॥ ३८

षष्ठी समर्थविभक्तिः । षष्ठ्यन्तादसुरशब्दात् इदमित्येतस्मिन्नर्थे यत् प्रत्ययो भवति ।

असुर्यं देवेभिर्धायि विश्वं । ऋ० ६।२०।२ । असुर्यं वा एतत् पात्रं यच्चक्रधृतं कुलालकृतं । का० । वी ते वाजा यासुर्याय हिन्विरे । ऋ० १०।५०।३ ॥ असुर्यं वर्णं नि रिणीते

अस्य तं । ऋ० ८।७१।२ ॥ असुराणां बाधकमिति वेदभाष्यम् । चत्वारि ते असुर्य्याणि नाम । ऋ० १०।५४।४ ॥ असुरविघातीनीति वेदभाष्यम् । इहासुराणां स्वमिति पाणिनीया स्मृतिः ।

## मायायामण् ॥ ३९

षष्ठ्यन्तादसुरशब्दान्मायायामर्थे अण् प्रत्ययो भवति । यतोऽपवादः । आसुरी माया स्वधया कृतासि । का० ।

## बहुलं वस्वादिभ्यः स्वार्थे ॥ ४०

विशेषातिदिष्टन्यायेन यतोऽनुवृत्तिः । वस्वादिभ्यो बहुलं यत् प्रत्ययो भवति स्वार्थे ।

हस्तौ पृणस्व बहुभिर्वसव्यैः । भा० । वसुभिरित्यर्थः । अग्निरीशे वसव्यस्य । ऋ० ४।५५।८ ॥ वसोरित्यर्थः । वसव्याः पान्तु । भा० । वसव एव वसव्याः । अपस्यो वसानाः । का० । अपोवसाना इत्यर्थः । अस्मिन् सुते सवने अस्त्वोक्यं । ऋ० १०।४४।६ ॥ ओक एव ओक्यम् । स्रोरन्त्ययोरिति सलोपः । कव्योऽसि हव्यवाहन । का० । कविरसीत्यर्थः । सत्यैः कव्यैः पितृभिर्घर्मसद्भिः । ऋ० १०।१५।६ ॥ कविभिरित्यर्थः । क्षेम्यस्येशे । क्षेम्यस्य वस्यति । का० । क्षेमस्येत्यर्थः । आयुर्वर्च्चस्यं । का० । वर्च्च इत्यर्थः । निष्केवल्यं शंसति । उक्थ्यं शंसति । मी० भा० । निष्केवलमेव निष्केवल्यम् । उक्थमेवोक्थ्यम् । नव्यं तदुक्थ्यं हितं । ऋ० १।१०५।१२ ॥ इंद्राग्नी स्तोमं जनयामि नव्यं । ऋ० १।१०९।२ ॥ नवमेव नव्यम् ।

न च भवति। क्राणा रुद्रेभिर्वसुभिः पुरोहितः। ऋ० १।५८।३ ॥ अपो देवीरुप ह्वये। ऋ० १।२३।१८॥ दाधार क्षेममोको न रण्वः। ऋ० १।६६।२ ॥ पुरां भिंदुर्युवा कविः। ऋ० १।११।४ ॥ क्षेमो न साधुः क्रतुर्न भद्रः। ऋ० १।६७।१ ॥ वर्चोधा यज्ञवाहसे। ऋ० ३।८।३ ॥ उक्थमिंद्राय शंस्यं। ऋ० १।१०।५ ॥ तूर्णी रथः सदा नवः। ऋ०। ३।११।५ ॥

## छन्दसोऽक्षरसमूहे ॥ ४१

अक्षरसमूहे इत्यनेन प्रकृत्यर्थौ विशिष्यते। अक्षरसमूहे वर्तमानात् छन्दःशब्दात् यत् प्रत्ययो भवति स्वार्थे।

ओ श्रावयेति चतुरक्षरं अस्तु श्रौषड़िति चतुरक्षरं येयजामह-इति पञ्चाक्षरं यजेति द्व्यक्षरं द्व्यक्षरो वषट्कारः एष वै सप्तदशाक्षरः छन्दस्यः प्रजापतिः। भा०। सप्तदशाक्षराण्येव छन्दस्यः।

तैत्तिरीयास्तु, आश्रावयेति चतुरक्षरं अस्तु श्रौषडिति चतुरक्षरं यजेति द्व्यक्षरं येयजामहइति पञ्चाक्षरं द्व्यक्षरो वषट्कारः एष वै सप्तदश प्रजापतिर्यज्ञमन्वायत्तः,—इति समाम्नाय, मन्त्राणां महिमानं प्रदर्श्य, एष वै छन्दस्यः प्रजापतिराश्रावयास्तु श्रौषड्यज येयजामहे वषट्कारो य एवं वेद पुण्यो भवति। तै० स० १।६।११ ॥ इत्यन्ते समामनन्ति।

अक्षरसमूहे इति किम्। कुरीरं छंदओपशः। ऋ० १०।८५।८ ॥

## कृते च ॥ ४२

तृतीया समर्थविभक्तिः । तृतीयान्तात् छन्दःशब्दात् कृतेऽर्थे यत् प्रत्ययो भवति ।

छन्दोभिः कृता छन्दस्या । छन्दस्यां३ वाचं वदन् । ऋ० ८।११३।६ ॥

## इनस्थ पूर्व्वैभ्यः ॥ ४३

तृतीयासमर्थाद्बहुवचनान्तात् पूर्व्वशब्दात् कृतेऽर्थे यत्प्रत्ययो-भवति । इनश्च । बहुवचनान्तेन पूर्व्वशब्देन स्तुतिवैशिष्ट्यं ज्ञाप्यते ।

पूर्व्वैः कृतः पूर्व्यः पूर्व्विणः । इंदुरिंद्राय पूर्व्यः । ऋ० ८।६७।८ ॥ स पूर्व्यः पवते यं दिवस्परि । ऋ० ८।७७।२ ॥ गम्भीरेभिः पथिभिः पूर्व्विणेभिः । श्रा० क० ॥

## मासतन्वोरनन्तरार्थे मत्त्वर्थे च ॥ ४४

यदनुवर्त्तते । प्रथमा समर्थविभक्तिः । मासतन्वोरित्यनेन प्रत्ययार्थौ विशिष्यते । प्रथमान्ताल्लिङ्गादनन्तरार्थं मत्त्वर्थे च यत्प्रत्ययो भवति । मासे तन्वां च विषये । मत्त्वर्थानामपवादः । तदस्त्यस्यास्मिन् वेत्ययं मत्त्वर्थः ।

मासे तावत् । मध्वनन्तरमस्येति मधव्योमासः । एवं । नभोऽभ्रम्, नभांसि विद्यन्तेऽस्मिन्निति नभस्यो मासः । एवं ।

सहस्यः । तपस्यः । मधव्यः । नभश्च नभस्यश्च वार्षिकावृतू । सहश्च सहस्यश्च हैमन्तिकावृतू । तपश्च तपस्यश्च शैशिरावृतू । तै० स० ४।४।११ ॥ तन्वां खल्वपि । ओजोऽस्यां विद्यते इत्योजस्या तनूः । ओजस्या तनूरवस्या । का० ।

मासतन्वोरिति किम् । मधुमता पात्रेन चरति । का० । दिवो द्रप्सो मधुमाँ आ विवेश । ऋ० १०।९८।३ ॥

## मधोरण् च ॥ ४५

प्रथमान्तान्मधुशब्दादनन्तरार्थे मत्वर्थे च यत् प्रत्ययो भवति । अण् च । मासे तन्वां च विषये ।

मधव्यो मासः । माधवो मासः । मधव्या तनूः । माधवा तनूः । का० । गणकृतमनित्यमिति न नदादित्वादी ।

## अदिट्राः ॥ ४६

मत्वर्थमात्रमनुवर्त्तते । प्रथमान्तात्लिङ्गान्मत्वर्थे अत् इत् र इत्येते प्रत्यया भवन्ति । मासतन्वोरर्थयोः । तकार उच्चारणार्थः ।

अत् । इड्विद्यतेऽस्मिन्निति इषोमासः । ऊर्ग् विद्यतेऽस्मिन्निति ऊर्ज्जो मासः । इत् । शुग्विद्यतेऽस्मिन्निति शुचिर्मासः । र । शुग्विद्यतेऽस्मिन्निति शुक्रो मासः । अयस्मयादित्वाद्वर्गप्रथमलक्षणं न स्यात् । इषश्च ऊर्ज्जश्च शारदावृतू । शुक्रश्च शुचिश्च ग्रैष्मिकावृतू । तै० स० ४।४।११ ॥ तन्वामन्वेष्यमुदाहरणम् ।

## लुक् च मन्त्वर्थस्य ॥ ४७

मत्वर्थे विहितः प्रत्ययो मत्वर्थः । मत्वर्थे विहितस्य प्रत्ययस्य लुक् च भवति । मासतन्वोरर्थयोः ।

नभांसि विद्यन्तेऽस्मिन्निति नभो मासः । सहो विद्यतेऽस्मिन्निति सहोमासः । तपो विद्यतेऽस्मिन्निति तपो मासः । मधु विद्यतेऽस्मिन्निति मधुर्मासः । नभश्च नभस्यश्च वार्षिकावृतू । सहश्च सहस्यश्च हैमन्तिकावृतू । तपश्च तपस्यश्च शैशिरावृतू । मधुश्च माधवश्च वासन्तिकावृतू । तै० स० ४।४।११ ॥

## यद्दीनावहन्योजसः ॥ ४८

प्रथमान्तादोजःशब्दान्मत्वर्थे यद्दीनौ प्रत्ययौ भवतः । अहन्यभिधेये । ओजो विद्यतेऽस्मिन्निति ओजस्यमहः । ओजसीनमहः । का० ।

## भगाच्च वेशोयशःपूर्वात् ॥ ४९

प्रथमासमर्थाद्वेशोयशःपूर्वाद्भगशब्दान्मत्वर्थे यद्दीनश्च प्रत्ययो भवति । वेशोबलम् । श्रीकाममाहात्म्यवीर्ययशांसि भगः ।

वेशश्चासौ भगश्चेति वेशोभगः । सोऽस्यास्तीति वेशोभग्यः । वेशोभगीनः । एवं, यशोभग्यः । यशोभगीनः । का० ।

## तुग्राद्घयो भवेऽन्यतरस्याम् ॥ ५०

सप्तमी समर्थविभक्तिः । तुग्रशब्दात् सप्तम्यन्ताद्भवेऽर्थे घयः प्रत्ययो भवति वा । पक्षे यत् । अस्माकाशयज्ञवरिष्ठेषु तुग्रशब्दं पठन्ति ।

त्वमग्ने वृषभस्तुग्रियाणां । का० । आवः शमं वृषभं तुग्रासु । ऋ० १।३३।१५ ॥ इति बह्वृचाः ॥ तुग्रियासु इति शाखान्तरे पठ्यते । उत यस्तुग्रे सचा । ऋ० ८।३२।२० ॥ इह विभाषां नेच्छन्त्येके ।

## ईयश्चाग्रात् ॥ ५१

सप्तम्यन्तादग्रशब्दाद्भवेऽर्थे ईय इयश्च प्रत्ययो भवति वा । पक्षे यत् । अग्रे भव अग्रीयः अग्रियः अग्र्यः । का० । अयं ते स्तोमो अग्रियः । ऋ० १।१६।७ ॥

## समुद्राच्च ॥ ५२

अन्यतरस्यामिति न स्मर्य्यते । इयस्तु वर्त्तते । सप्तम्यन्तात् समुद्रशब्दात् भवेऽर्थे इयः प्रत्ययो भवति ।

दिवो धर्त्ता सिन्धुरापः समुद्रियः । ऋ० १०।६५।१३ ॥ समुद्रिया अप्सरसो मनीषिणं । ऋ० ६।७८।३ ॥

## संघे चाभ्रात् ॥ ५३

अभ्रशब्दादियः प्रत्ययो भवति । संघे भवे चार्थे । यथायोगं समर्थविभक्तिः ।

संघे तावत् । वावदतो अभ्रियस्येव घोषाः । ऋ० १०।६८।१ ॥ सो अभ्रियो न यवस उदन्यन् । ऋ० १०।९९।८ ॥ भवे खल्वपि । इदमकर्म नमो अभ्रियाय । ऋ० १०।६८।१२ ॥ यदभ्रियां वाचमुदीरयंति । ऋ० ११६८।८ ॥

## अमित्रादिभ्यो बहुलम् ॥ ५४

अमित्रादिभ्यः शब्देभ्यो बहुलमियः प्रत्ययो भवति।

जघ्निर्वृत्रममित्रियं। ऋ० ८।६।११ ॥ न च भवति। परेऽवर उभया अमित्राः। ऋ० २।१२।८॥ सुमित्रिया न आप ओषधयः सन्तु दुर्मित्रियास्तस्मै सन्तु। मा० ६।२२ ॥ इति माध्यन्दिनीयाः। सुमित्रा न आप ओषधयः सन्तु दुर्मित्रास्तस्मै भूयासुः। तै० स० १।४।४५ ॥ इति तैत्तिरीयाः। नक्षत्रेभ्यः स्वाहा नक्षत्रियेभ्यः स्वाहा। मा० २२।२८ ॥ इति चोदाहरन्ति। बहुलग्रहणात् यदपि। ते नो रासंतां महये सुमित्र्याः। ऋ० १०।६५।३ ॥ अमित्रादिराकृतिगणः।

## सहस्रात् सम्मितमत्वर्थयोः ॥ ५५

सम्मितस्तुल्यः सदृश इत्यनर्थान्तरम्। सहस्रशब्दादियः प्रत्ययो भवति। सम्मितेऽर्थे मत्वर्थे च। यथायोगं समर्थविभक्तिः।

सहस्रेण सम्मितः सहस्रं विद्यतेऽस्येति वा सहस्रियः। अयमग्निः सहस्रियः। का०। सहस्रतुल्य इत्यर्थः। सहस्रियासोऽपां नोर्मयः। ऋ० १।१६८।२ ॥ सहस्रियं दम्यं भागमेतं। ऋ० ७।५६।१४ ॥ इत्यपि बह्वृचाः समामनन्ति।

## ऋतोरस्य प्राप्ते ॥ ५६

प्रथमा समर्थविभक्तिः। प्रथमान्तात् ऋतुशब्दादस्य प्राप्तइत्येतस्मिन्नर्थे इयः प्रत्ययो भवति।

भराय सु भरत भागमृत्वियं । १०।१००।१ ॥ इंद्रस्य भागमृत्वियं । १०।१७९।१ ॥ तमोषधीर्दधिरे गर्भमृत्वियं । ऋ० १०।९१।६ ॥

## ईयो वत्सरान्निर्वृत्तादिषु ॥ ५७

वत्सरेण तदन्तविधिरिष्टः । वत्सरान्तात्लिङ्गादीयः प्रत्ययो-भवति । निर्वृत्तादिष्वर्थेषु ।

निर्वृत्तमधीष्टो भृतो भूतो भावीत्यमी निर्वृत्तादयः । अधीष्टः अध्येषणया व्यापारितः । भृतो भृतिगृहीतो दासः । भृतिः कर्म्ममूल्यम् । भूतः स्वसत्तया व्याप्तकालः । स एवानागतो-भावी । तत्र निर्वृत्ते तृतीया समर्थविभक्तिः । अधीष्टादिषु तु द्वितीया । इद्वत्सरीयः । इदावत्सरीयः । अनुवत्-सरीयः । का० ।

## संपरिपूर्व्वादीनश्च ॥ ५८

संपूर्व्वात् परिपूर्व्वाच्च वत्सरान्तात्लिङ्गादीनः प्रतययो भवति । निर्वृत्तादिष्वर्थेषु । चकारादीयश्च ।

संवत्सरीणं पय उस्रियायाः । ऋ० १०।८७।१७ ॥ ब्रह्म कृण्वंतः परिवत्सरीणं । ऋ० ७।१०३।८ ॥ ईयः खल्वपि । संवत्सरीयः । परिवत्सरीयः । का० ।

## वतिरुपसर्गाद्धात्वर्थे ॥ ५९

धात्वर्थे इत्यनेन प्रकृत्यर्थो विशिष्यते । धातोरर्थोऽर्थो-यस्येति विग्रहः । इष्टत्वात् साधनमन्यपदार्थः । धात्वर्थः क्रिया

साधनं कारकम् । धात्वर्थविशिष्टे साधने वर्त्तमानादुपसर्गात् वतिः प्रत्ययो भवति । स्वार्थे । इमे किलोपसर्गाः, केचिदुपात्तायां क्रियायां तया संबध्यन्ते, केचित् पुनरश्रूयमाणायां तस्यां क्रियाविशिष्टं साधनमाचक्षते । तत्रोत्तरादुपसर्गादिहैतैर्विधानम् ।

स उद्वतो निवतो याति वेविषत् । ऋ० ३।२।१० ॥ याति देवः प्रवता यात्युद्वता । ऋ० १।३५।३ ॥ याः प्रवतो निवत उद्वतः । ऋ० ७।५०।४ ॥ यदुद्वतो निवतो यासि बप्सत् । ऋ० १०।१४२।४ ॥

## युष्मदस्मदोर्वन्तुः सादृश्ये ॥ ६०

युष्मदस्मच्छब्दाभ्यां सादृश्येऽर्थे वन्तुः प्रत्ययो भवति ।

त्वावतो हीन्द्र क्रत्वे अस्मि त्वावतोऽवितुः शूर रातौ । ऋ० ७।२५।५ ॥ न त्वावाँ इंद्र कश्चन न जातो न जनिष्यते । ऋ० १।८२।५ ॥ एवं विप्रस्य मावतः । ऋ० १।१७।२ ॥ यद्दित्सस्सि स्तुवते मावते वसु । ऋ० ८।८८।३ ॥

## बहुलं मन्त्वर्थाः ॥ ६१

मन्त्वर्थाः प्रत्यया बहुलं भवन्ति ।

अग्ने तेजस्विन् । का० । अग्निस्ते ओजस्वी । सि० । ओजस्वंतं विरप्शिनं । ऋ० ८।७६।५ ॥ यो वर्चिनः शतमिंद्रः सहस्रं । ऋ० २।१४।६ ॥ स्रोरन्तयोरिति सलोपः । अग्नी रथी सुरूप इत् । ऋ० ८।४।९ ॥ सूर्यो वर्चस्वान् । का० । सूत्रामाणं पृथिवीं द्यामनेहसं । वर्म्मण्वंतो न योधाः शिमीवंतः ऋ० १०।७८।७ ॥ एवमन्येऽपि ।

## रेरवनीवा मत्वर्थे ॥ ६२

प्रथमा समर्थविभक्तिः । प्रथमान्ताल्लिङ्गान्मत्वर्थे र इर वन् ई व इत्येते प्रत्यया भवन्ति ।

र । मेधारः । भा० । इर । विभुर्विश्वस्मै भुवनाय मेधिरः । ऋ० १।३१।२ ॥ विदुष्टे तस्य मेधिराः । ऋ० १।११।७ । स्व१ः सिषासन्तूथिरोगविष्टिषु । ऋ० ८।७६।२ ॥ वन् । यो मर्त्त्येष्वमृत ऋतावा । ऋ० १।७७।१ ॥ ऋतावानं यज्ञियं विप्रमुक्थ्य१ं । ऋ० ३।२।१३ ॥ ऋतावाना यदीमहे । ऋ० १।१३६।४ ॥ ई । इषो रथीः सयुजः शूर वाजान् । ऋ० ३।३०।११ ॥ गिरो देवि रथीरिव । ऋ० ५।६१।१७ ॥ सुमङ्गली रियं वधूः । ऋ० १०।८५।३३ ॥ इति चोदाहृतं भाष्ये । व । उद्वा च उद्वती च । भा० । विम्बारं । कुररावं । इष्टकावं । भा० । ये अप्सवमर्णवं चित्रराधसः । ऋ० १०। ६५।३ ॥ अप्स इति रूपनामसु पठ्यते नैघण्टुकैः । द्विधा खल्वप्सशब्दमामनन्ति सान्तमकारान्तं च । सान्तपक्षे स्तोर-न्तयोरिति सलोपः । बहुलाधिकारान्मत्वादयोऽपि भवन्ति । अश्वो रथी सुरूप इत् । ऋ० ८।४।९ ॥

## अप्सादृस् ॥ ६३

अप्सशब्दान्मत्वर्थे रस्प्रत्ययो भवति । सान्तस्य सलोपः ।

अप्सरा जारमुपसिष्मियाणा । ऋ० १०।१२३।५ ॥ अप्स-रस उप सेदुर्वसिष्ठाः । ऋ० ७।३३।९ ॥ अप्सरसां गंधर्वाणां । ऋ० १०।१३६।६ ॥

## सूक्तसाम्नोरीय: ॥ ६४

सूक्तसाम्नोरभिधेययोर्मत्वर्थे लिङ्गादीय: प्रत्ययो भवति ।

अच्छावाकशब्दो विद्यतेऽस्मिन्निति अच्छावाकीयं सूक्तम् । बहुपदसम्भवेऽपि केनचिदेव पदेन व्यपदिश्यते । एवं, मित्रावरुणीयम् । तथा । यज्ञायज्ञीयं साम । एवं, वारवन्तीयम् । अनुकरणादपि प्रत्ययोत्पत्तिरिष्यते । अस्यवामीयम् । कयाशुभीयम् ।

## स्वार्थे चेत् ॥ ६५

लिङ्गादीत्प्रत्ययो भवति स्वार्थे । तकार उच्चारणार्थ: ।

अग्ने रथीरध्वराणां । ऋ० १।४४।२ ॥ रथीरध्वराणामित्याहैष हि देवरथ इति । रथीरध्वराणामितत्याह रथो वा एष भूतो देवेभ्यो हव्यं वहति । ऋ० भा० । इति च ब्राह्मणं भवति ।

## सभाया: साधावेय: ॥ ६६

सप्तमी समर्थविभक्ति: । सप्तम्यन्तात् सभाशब्दात् साधावर्थे एय: प्रत्ययो भवति ।

सभेयोऽस्य युवा यजमानस्य वीरो जायतां । का० । सादन्यं विदथ्यं सभेयं । ऋ० १।९१।२० ॥ सभेयो विप्रो भरते मती धना । ऋ० २।२४।१३ ॥

## धेयोमित्ररत्नाभ्याम् ॥ ६७

साधाविति न स्मर्यते । मित्रशब्दात् रत्नशब्दाच्च धेय: प्रत्ययो भवति । स्वार्थे ।

मित्रेषाग्ने मित्रधेये यतस्व । मा० २७।१ ॥ यश्चि देवान् रत्नधेयाय विश्वान् । ऋ० ७।८।५ ॥ उभयत्रैव दधाते-र्यंप्रत्ययेन सिद्धेरनतिप्रयोजनोऽयं योग इत्याहुः ।

## सर्वदेवाभ्यां तातिः ॥ ६८

सर्व्वशब्दात् देवशब्दाच्च तातिः प्रत्ययो भवति । स्वार्थे ।

आदस्मभ्यमा सुव सर्व्वतातिं । ऋ० ३।५४।११ ॥ त आदित्या-आगता सर्व्वतातये । ऋ० १।१०६।२ ॥ प्रतीचो जूर्णिर्देवतातिमेति । ऋ० ७।३८।१ ॥ बृहस्पतिं मनुषो देवतातये । ऋ० ३।२६।२ ॥

## शमरिष्टशिवेभ्यः करोतौ ॥ ६९

द्वितीया समर्थविभक्तिः । करोताविति धात्वर्थनिर्देशः । द्वितीयान्तेभ्यः शं अरिष्ट शिवेभ्यः करोत्यर्थे तातिः प्रत्ययो-भवति ।

शं करोतीति शन्तातिः । एवमरिष्टतातिः । शिवतातिः । का० । आ त्वा गमं शंतातिभिरथो अरिष्टतातिभिः । ऋ० १०।१३७।४ ॥

## भावे च ॥ ७०

षष्ठी समर्थविभक्तिः । षष्ठ्यन्तेभ्यः शमरिष्टशिवेभ्यो भावेऽर्थे तातिः प्रत्ययो भवति ।

शन्तातिः । अरिष्टतातिः । शिवतातिः । चकारोऽनुक्त-

समुच्चयार्थः । तेन स्वार्थेऽपि । अथो अरिष्टतातये । ऋ० १०।६०।८ ॥ अस्मा अरिष्टतातये । ऋ० १०।९७।७ ॥

## ज्येष्ठात् प्रशंसायाम् ॥ ७१

प्रशंसायामित्यनेन प्रकृत्यर्थो विशिष्यते । प्रशंसायां वर्त्त-मानात् ज्येष्ठशब्दात् तातिः प्रत्ययो भवति । स्वार्थे ।

ज्येष्ठतातिं बर्हिषदं स्वर्विदम् । ऋ० ५।४४।१ ॥ तमोऽपि स्वादेव । प्र वः सतां ज्येष्ठतमाय सुष्टुतिं । ऋ० २।१६।१ ॥ न च भवति । तदिदास भुवनस्य ज्येष्ठं । ऋ० १०।१२०।१ ॥

## वृकात्तिश्च ॥ ७२

प्रशंसायां वर्त्तमानात् वृकशब्दात् तिः प्रत्ययो भवति । चकारात्तातिश्च । स्वार्थे ।

यो नो दुरेवो वृकतिर्दभीतिः । ऋ० ४।४१।४ ॥ यो नो-मरुतो वृकतातिमर्त्यः । ऋ० २।३४।९ ॥

## परिपन्थिपरिपरिणौ पर्य्यवस्थातरि ॥ ७३

पर्य्यवस्थाता प्रतिपक्षः । पर्य्यवस्थातर्य्यभिधेये परिपन्थिन् परिपरिन् इत्येतौ निपात्येते ।

मा विदन् परिपंथिनः । ऋ० १०।८५।३२ ॥ अप त्यं परिपंथिनं । ऋ० १।४२।३ ॥ मा त्वा परिपरिणो विदन् । का० ।

## ह्रद्या अप्सु ॥ ७४

अप्स्वभिधेयासु ह्रद्या इति निपात्यते। ह्रदे भवाः ह्रद्या आपः ।

## तोरिष्ठेयन्सू लोपश्च तोरतिशायने ॥ ७५

उत्सृष्टानुबन्धनिर्देशस्तृच्तृणोर्ग्रहणार्थः। अतिशायनं क्रियागुणप्रकर्षः। अतिशायने वर्त्तमानात् तृजन्तात् तृनन्ताच्च लिङ्गात् इष्ठ ईयनसु इत्येतौ प्रत्ययौ भवतः। तृच्तृणोर्लोपश्च भवति ।

पुरु सखिभ्य आसुतिं करिष्ठः। ऋ० ७।९७।७ ॥ दोहीयसी धेनुः। का०। अतिशयेन कर्त्ता अतिशयेन दोग्ध्रीत्यर्थः। न यथासंख्यमिहेति ।

## प्रत्नपूर्वविश्वेमेभ्यस्थे वार्थे ॥ ७६

यथायोगं समर्थविभक्तिः। प्रत्न पूर्व्व विश्व इम इत्येतेभ्यः थाप्रत्ययो भवति। इवार्थे ।

स प्रत्नथा सहसा जायमानः। ऋ० १।९६।१ ॥ तन्तु प्रयः प्रत्नथा ते शुशुक्वनं। ऋ० १।८२।२ ॥ अक्रन्नुषासो वयुनानि पूर्व्वथा। ऋ० १।८२।२ ॥ नू इत्था ते पूर्व्वथा च प्रवाच्यं। ऋ० १।१३२।४ ॥ यत्सोममनु क्रतुना विश्वथा विभुः। ऋ० १।१४१।९ ॥ योऽवरे वृजने विश्वथा विभुः। ऋ० २।२४।११ ॥ त्वं प्रत्नथा पूर्व्वथा विश्वथेमथा। ऋ० ५।

४४।१ ॥ यथाप्राप्तञ्च। ताः प्रत्नवन्नव्यसीर्नूनमस्मे। ऋ० १।१२४।९ ॥ ययातिवत् सदने पूर्व्ववच्छुचे। ऋ० १।३१।१७ ॥ इत्यादि।

## इदमः प्रकारे ॥ ७७

इदम् शब्दात् प्रकारेऽर्थे थाप्रत्ययो भवति।

अग्न इत्थेतरा गिरः। सा० छ० १।१।१।७ ॥ गंधर्व्व इत्था पदमस्य रक्षति। ऋ० ९।८३।४ ॥ इत्यादावित्था प्रकृतान्तरं सत्यार्थं।

## हेतौ च किमः ॥ ७८

यथायोगं समर्थविभक्तिः। किम्शब्दात् थाप्रत्ययो-भवति। हेतौ प्रकारे चार्थे।

कथा ग्रामं न पृच्छसि। ऋ० १०।१४६।१ ॥ कुतो हेतो-रित्यर्थः। कथा दाशेमाग्नये बृहद्भाः। ऋ० ४।५।१ ॥ यथा प्राप्तञ्च। देवं मनः कुतो अधि प्रजातं। ऋ० १।१६४।१८ ॥ कथं रसाया अतरः पयांसि। ऋ० १०।१०८।१ ॥

## तदिदमोर्हिंदा काले ॥ ७९

सप्तमी समर्थविभक्तिः। काले वर्त्तमानाभ्यां तदिदंशब्दाभ्यां र्हिं दा इत्येतौ प्रत्ययौ भवतः। यथासंख्यम्।

न मृत्युरासीदमृतं न तर्हिं। ऋ० १०।१२९।२ ॥ इदा चिदह्न इदा चिदक्तोः। ऋ० ४।१०।५ ॥ यथाप्राप्तञ्च। नासदा-

सोम्नो सदासीत्तदानीं । ऋ० १०।१२९।१ ॥ नेदानीं पीतिरश्विना ततान । ऋ० ५।७६।३ ॥ थाश्चिदानां सामान्येन विभक्ति-संज्ञेष्यते ।

## द्विस्वराद्विकारावयवयोर्मयट् ॥ ८०

षष्ठी समर्थविभक्तिः । षष्ठ्यन्तात् द्विस्वरालिङ्गात् विकारे अवयवे चार्थे मयट् प्रत्ययो भवति । टकारो नदाद्यर्थः ।

यस्य पर्णमयी जुहूर्भवति न स पापश्लोकं शृणोति । मी० भा० । शरमयं बर्हिर्भवति । दर्भमयं वासो भवति । का० ।

द्विस्वरादिति किम् । वैकङ्कतः स्रुवः । पालाशी जुहूः । का० । तस्येदमित्यण् ।

## न वर्ध्रविल्वोकारवद्भ्यः ॥ ८१

वर्ध्रशब्दात् विल्वशब्दादुकारवतः शब्दाच्च विकारावयवयोरर्थयोः मयट् प्रत्ययो न भवति ।

वार्ध्री रज्जुः । मि० । वार्ध्री वालप्रग्रथिता भवति । का० । वैल्वो ब्रह्मवर्चसकामेन कार्य्यः । का० । वैल्वः पालाशो वा यूपो भवति । मी० भा० । मौञ्जं शिक्यं । का० । मौञ्जा अदृष्टा-वैरिणाः । ऋ० १।१९१।३ ॥ सर्व्वत्र तस्येदमित्यण् । उकारवद्-ग्रहणात् दीर्घवतो न निषेधः । भूममयान्यम्भांसि । का० । वस्तु-निर्देशस्तद्वन्तविधिनिरासार्थः । तथात्वे स्विन्नैव स्यात् । वैणवी यष्टिरिति ।

## बादयो बहुलम् ॥ ८२

अङ्गादेः सर्वनाम्नोबहोश्च विहितास्तादयोऽन्येभ्योऽपि बहुलं भवन्ति।

धिष्व वज्रं हस्त आदक्षिणत्राभि प्रमंद पुरुदत्र मायाः। ऋ० ६।१८।६ ॥

## नान्तादसंख्यादेः संख्यायाः पूरणे थमौ ॥ ८३

असंख्यादेर्नकारान्तात् संख्यावाचिनः शब्दात् संख्यायाः पूरणेऽर्थे थमौ प्रत्ययौ भवतः।

पञ्चानां पूरणः पञ्चथः पञ्चमः। सप्तानां पूरणः सप्तथः सप्तमः। पर्णमयानि पञ्चथानि भवन्ति। का०। पञ्चममिन्द्रियमस्यापाक्रामत्। का०। साकंजानां सप्तथमाहुरेकजं। ऋ० १।१६४।१५ ॥ सरस्वती सप्तथी सिंधुमाता। ऋ० ७।३६।६ ॥

नान्तादिति किम्। अन्यस्मान्मा भूत्। असंख्यादेरिति किम्। एकादशानां पूरण एकादशः। पतिमेकादशं कृधि। ऋ० १०।८५।४५ ॥ विश्वेदेवास्त्रय एकादशासः। ऋ० ८।८२।४ ॥ पुनः संख्याग्रहणं विषयोपदर्शनार्थम्।

## ऋतव्यवास्तव्यवास्त्वमाध्वाः ॥ ८४

एतानि निपात्यन्ते।

ऋतौ भवं ऋतव्यम्। वास्तौ भवं वास्तव्यम्। भवे यत्। वस्तुनि भवो वास्त्वः। स्वमादित्वादण्। उकारस्य वकारो निपात्यते। वास्तुशब्दस्यायं निपात इत्येके। मधुशब्दादणन्तादी-

योऽण् । तस्मिन्नुकारस्य वकारो निपात्यते । स्त्रियामेवायं निपातः । ध्रुवे यद्वां सुते माध्वी वसूयुः । ऋ० ७।६७।४ ॥ माध्वीर्गावो भवन्तु नः । ऋ० १।९०।८ ॥

## हिरण्ययहिरण्मयौ ॥ ८५

एतौ निपात्येते । हिरण्यशब्दान्मयटि पूर्वत्र मयटो मलोपः उत्तरत्र हिरण्यशब्दस्य यलोपो निपात्यते ।

इंद्रो वज्री हिरण्ययः । ऋ० १।७।२ ॥ हिरण्ययी वां रभिरीषा अक्षो हिरण्ययः । उभा चक्रा हिरण्यया । ऋ० ८। ५।२९ ॥ हिरण्मयेन पात्रेण । मा० ४०।१७ ॥ हिरण्मये परे कोशे । छा० उ० ।

## पश्चपश्चापश्चाताच्चास्तात्यर्थे ॥ ८६

दिक्शब्देभ्यः सप्तमीपञ्चमीप्रथमान्तेभ्यो दिग्देशकालेष्वस्तातिर्विहितः । तदर्थे पश्च पश्चा पश्चातादित्येते निपात्यन्ते । प्रथमयोरपरशब्दस्य पश्चादेशः अकाराकारौ च प्रत्ययौ । चरमे पश्चिमशब्दस्यापरशब्दस्य वा पश्चादेश आताच्च प्रत्ययः ।

परो व्याघ्रो जायते पश्चसिंहः । का० । पश्च हि सः । सि० । पश्चा मृधो अप भवंतु विश्वाः । ऋ० १०।६७।११ ॥ पश्चा संतं पुरस्कृधि । ऋ० १०।१७१।४ ॥ पाहि पश्चातादुत वा पुरस्तात् । ऋ० ८।४८।१५ ॥ नव पश्चाताल् स्थिविमंत आयन् । ऋ० १०।२७।१५ ॥ चकारात् पश्चादित्यपि । मर्यो न योषामभ्येति पश्चात् । ऋ० १।११५।२ ॥ स्वसार' जारो अभ्येति

पश्चात् । ऋ० १०।३।३ ॥ भाषायामपि । पश्चार्द्धेन प्रविष्टः प्रर-पतनभयाद्भूयसा पूर्व्वकायम् ।

## तरांतमामोर्ह्रस्वोऽन्यतरस्याम् ॥ ८७

तरां तमामित्येतयोर्ह्रस्वो भवति वा ।

द्राघीय आयुः प्रतरं दधानाः । ऋ० १।५३।११ ॥ प्रतरां वस्यः । का० । इन्द्रेमं प्रतरां नय । मा० १७।५७ ॥

## बहुलं वो मस्य मन्तोः ॥ ८८

मन्तोर्मकारस्य बहुलं वकारो भवति ।

प्रयद्दिवो हरिवः स्थातरुग्र । ऋ० १।३३।५ ॥ इंद्राय शूषं हरिवंतमर्चत । ऋ० १०।९६।२ ॥ हरिवते हर्यश्वाय धानाः । ऋ० ३।५२।७ ॥ तपुर्यंयस्तु चरुरग्निवाँ इव । ऋ० ७।१०४।२ ॥ यो अस्मै रेवान्न सुनोति सोमं । ऋ० १०।१६०।४ ॥ आहं सरस्वतीवतोः । ऋ० ८।३८।१० ॥ त्रिवती याज्यानुवाक्या भवति । अधिपतिवती जुहोति । दधीवांश्चरुः । का० । वाजे नाम्नाः सप्तीवंत एवैः । ऋ० १०।६।६ ॥ सप्तीवंता सपर्यवः । ऋ० ७।९४।१० ॥ न च भवति । सूर्यंते द्यावापृथिवीमन्तं । सप्तर्षिमन्तं । ऋषिमान् । ऋतीमान् । का० । तदेतद्यथायोगं मन्तुवन्तुभ्यां सिद्धं प्रपञ्चार्थं वचनम् ।

मस्येति किम् । सर्व्वादेशो मा भूत् । मन्तोरिति किम् । मयटो मा भूत् ।

## नुरादिरनः ॥ ८९

अनन्तात् परस्य मन्तोरादिर्नुरागमो भवति ।

अक्षण्वतः कर्णवंतः सखायः । ऋ० १०।७१।७॥ पूषण्वते ते चकृमा करंभं । ऋ० ३।५२।७ ॥ अस्थन्वंतं यदनस्था बिभर्ति । ऋ० १।१६४।४ ॥ शीर्षण्वती । मूर्द्धन्वती । का० । लिङ्गान्तनकारस्येति नलोपः । पदकारास्तु, अक्षण् पूषण् इतीऽवमाद्यवग्रहन्ति । नकारागमस्य परादित्वे तु अक्ष पूष इतीऽवमाद्यवग्रहः प्राप्नोति । ततः पूर्व्वान्तोऽयं नुरागमयितव्यः । लुप्तस्यापि तस्यालुप्तवद्भावात् पुनर्नलोपो न भवति । अतो नकारस्यानन्त्यत्वात् णत्वविधिस्तु प्रवर्त्तते । एवं खल्ववग्रहः पदकाराणां समर्थितो भवति । भाष्ये तु, न लक्षणेन पदकारा अनुवर्त्तनीयाः । पदकारैरेव तु लक्षणमनुवर्त्तनीयम् । तस्मात् यथालक्षणमवग्रहीतव्यमित्युक्तम् । पदकारैः किलेयिवांसमित्यादौ पदत्वाभावेऽप्यवग्रहः क्रियते । ईयिऽवांसमिति । पूर्व्वैभिरित्यादौ सत्यपि पदत्वे न क्रियते इति । मन्तोरित्येव । प्रश्रयाः पतरं चितयंतमक्षभिः । ऋ० २।२।४ ॥

## नान्तरतमयोः ॥ ९०

नकारात् परयोस्तरतमयोरादिर्नुरागमो भवति ।

सुपथिन्तरः । भा० । एदु मध्वोर्मदिंतरं । ऋ० ८।२४।१६ ॥ अभिनक्षा वृत्रहा दस्युहंतमं । ऋ० १०।१७०।२ ॥ अपाम्

पदकारैः दस्युहन्ऽतममित्यवगृह्यते। तरतमयोरित्येव। सर्वं राजभ्यः परमा चिदंति। ऋ० २।२७।३ ॥

## भूरिदावत्तुः ॥ ९१

भूरिदावन् इत्येतस्मात् परयोस्तरतमयोस्तुरागमो भवति।

भूरिदावत्तरो जनः। ऋ० ८।५।३९ ॥ अश्रवं हि भूरिदावत्तरा वां। ऋ० १।१०९।२ ॥ पदकारैः पूर्ववदवगृह्यते; भूरिदावत्ऽतर इति। तरतमयोरित्येव। भूरिदावरीं सुमतिं। ऋ० ८।२।२१ ॥

## ईद्रथिनः ॥ ९२

तरतमयोः परतो रथिन् इत्येतस्य ईकारोऽन्तादेशो भवति।

नकिष्टद्रथीतरः। ऋ० १।८४।६ ॥ स रथेन रथीतमः। ऋ० ६।४५।१५ ॥ या सुरथा रथीतमा। ऋ० १।२२।२ ॥ रथीतमं कपर्दिनं। ऋ० ६।५५।२ ॥ संहितायामयमीकारादेशः। रथिऽतरः इत्येवमादि ह्यवगृह्यते। केचिद्रवग्रहादर्शनात्स्वार्थीयमीकारमाहुः। तथावग्रहे दोषः स्यात्।

## रे रयेर्मतौ बहुलम् ॥ ९३

मतौ परतो रयिशब्दस्य स्थाने बहुलं रे इत्ययमादेशो भवति।

स रेवन्याति प्रथमो रथेन। ऋ० २।२७।१२ ॥ रेवाँ इव प्र चरा पुष्टिमच्छ। ऋ० ८।४८।६ ॥ पतिः सिंधूनामसि रेव-

तीनां । ऋ० १०।१८०।१ ॥ न च भवति । जैत्रं क्रतुं रयि-मद्वीरवद्यशः । ऋ० १०।३६।१० ॥ अर्वंतो वा ये रयिमंतः सातौ । ऋ० १०।७४।१ ॥ वंसद्रयिं रयिवतश्च जनान् । ऋ० ६।६८।५ ॥

मन्ताविति किम् । विश्ववेदसो रयिभिः समोकसः । ऋ० १।६४।१० ॥ संहितायामवग्रहे चादेशोऽयम् ।

## कच्यायायाशब्दस्य संज्ञायामीर्वन्तौ ॥ ९४

कच्याशब्दस्य यो याशब्दस्तस्य ईकारादेशो भवति । वन्तौ परतः । संज्ञायां गम्यमानायाम् ।

अहं कक्षीवाँ ऋषिरस्मि विप्रः । ऋ० ४।२६।१ ॥ कक्षी-वंतं य औशिजः । ऋ० १।१८।१ ॥ कक्षीवते वृचयामिंद्र सुन्वते । ऋ० १।५१।१३ ॥

याशब्दस्येति किम् । अन्तस्य मा भूत् । संज्ञायामिति किम् । असंज्ञायां मा भूत् । कच्यावान् हस्ती । का० । वन्ताविति किम् । परि ष्वजध्वं दश कच्याभिः । ऋ० १०। १०१।१० ॥

## सोमादीनां दीर्घः ॥ ९५

वन्तौ परतः सोमादीनां बहुलं दीर्घो भवति ।

अश्वावतीं सोमावतीं । ऋ० १०।९७।७ ॥ अश्वावतीर्गोमती-र्विश्ववाराः । ऋ० १।१२३।१२ ॥ इन्द्रियावान् मदिन्तमः । का० । विश्वकर्मणा विश्वदेव्यावता । ऋ० १०।१७०।४ ॥

वीर्यावन्तमभिमातिषाहं । तै० स० १।२।७ ॥ तौ यदा संगच्छते अथ वीर्य्यावत्तरो भवति । तै० ब्रा० २।७।३ ॥ न च भवति । इन्द्रवतो हविरिदं जुषतां । तै० ब्रा० २।६।१६ ॥ अवर्द्धयन्त्सोमवत्या वचस्यया । ऋ० १०।११३।८ ॥ वन्ताविति च । सोमेभिरीं पृणता भोजमिंद्रं । ऋ० २।१४।१० ॥ संहितायां दीर्घोऽयं न त्ववग्रहे । ह्रस्वो ह्यवगृह्यते । सोमादिराकृतिगणः ।

## इन्द्रियादीनां विनि ॥ ९६

विनि परत इन्द्रियादीनां दीर्घो भवति ।

इन्द्रस्याहं देवयज्ययेन्द्रियावी भूयासं । तै० स० १।६।२ ॥ यस्मिन् जाते एतामिष्टिं निर्वपति पूतएव स तेजस्व्यन्नाद इन्द्रियावी पशुमान् भवति । मी० भा० । उभोभयाविन्नुप धेहि दंष्ट्रा । ऋ० १०।८७।३ ॥ मंहिष्ठमुभयाविनं । ऋ० ८।१।२ ॥ त्वं तस्य द्वयाविनः । ऋ० १।४२।४ ॥ मा ते रसस्य मत्सत द्वयाविनः । ऋ० ९।८५।१ ॥ हृदयावी । मर्मावी । भा० । क्वचित् संहितायां क्वचिदवग्रहेऽप्ययं दीर्घः । इन्द्रियादिराकृतिगणः ।

## अन्यत्रापि दृश्यते ॥ ९७

अन्यत्रापि दीर्घो दृश्यते ।

अप वक्ता हृदयाविधश्चित् । ऋ० १।२४।८ ॥ दृशिग्रहणं प्रयोगानुसारार्थम् ।

## ऋजोऋतोर इष्ठेमेयःसु बहुलम् ॥ ९८

इष्ठ इमन् ईयन्सु इत्येतेषु परतः ऋजुशब्दस्य ऋकारस्य र-इत्ययमादेशो बहुलं भवति ।

त्वं रजिष्ठमनु नेषि पंथां । ऋ० १।९१।१ ॥ येत्यध्वर्युः पथिभी रजिष्ठैः । ऋ० ८।१०१।१० ॥ न च भवति । त्वमृ-जिष्ठः । का० । एवमन्यत्रापि ।

ऋत इति किम् । सर्व्वादेशो मा भूत् । इष्ठेमेयःस्विति किम् । आदित्या ऋजुना पथा । ऋ० १।४१।५ ॥

## समासान्तादसन्तादत् ॥ ९९

समासान्तादसन्तशब्दात् परोबहुलमत्प्रत्ययो भवति ।

देवच्छन्दसानि । मनुष्यच्छन्दसानि । का० । न च भवति । देवच्छन्दः । का० । सूत्रामाणं पृथिवीं द्यामनेहसं । मा० २१।५ ॥

समासान्तादिति किम् । का त उपेतिर्मनसो वराय । ऋ० १।७६।१ ॥ असन्तादिति किम् । विश्वदाव जुहोति । का० ।

## बहुव्रीहौ नतुः ॥ १००

बहुव्रीहिसमासान्तान्नेतृशब्दादत् प्रत्ययो भवति ।

बृहस्पतिनेत्राः सोमनेत्राः । का० ।

## अन्यतोऽपि दृश्यते ॥१०१

अन्यस्मादपि अत्प्रत्ययो दृश्यते।

स हि स्वत्रस्य मनसस्य चित्तिभिरेवावदस्य यजतस्य सध्रेः। ऋ० ५।४४।१० ॥ देवाः स्तवंते मनुषाय सूरयः। ऋ० १०।६५।४ ॥ दृशिग्रहणं प्रयोगानुसारार्थम्।

## पदयोर्वृद्धिर्देवताद्वन्द्वे सूक्तहविषोः ॥ १०२

वृद्धिरादौ सणे इत्यनेन या वृद्धिर्विहिता, सा देवताद्वन्द्वे द्वयोः पदयोर्भवति। सूक्ते हविषि चार्थे।

आग्निमारुतं सूक्तम्। आग्निमारुतीमनड्वाहीमालभेत। का०।

सूक्तहविषोरिति किम्। स्कान्दविशाखौ देवते अस्य स्कान्दविशाखः। एवं, आग्निप्रजापत्यम्। कथं, आग्निमारुतं कर्म। सूक्तहविषोर्योगात्। यथा दण्डयोमाहचकः पुरुष इति।

## न दीर्घाद्वरुणस्य ॥ १०३

दीर्घात् पूर्व्वपदाद्वरुणस्योत्तरपदस्य वृद्धिर्न भवति।

ऐन्द्रावरुणं मैत्रावरुणं सूक्तं हविर्वा। दीर्घादिति किम्। आग्निवारुणीमनड्वाहीमालभेत। का०। भाषायामपीति मतम्। तत्र क्वचिदधिकारात् सिद्धम्। प्रपञ्चार्थं योगद्वयम्।

इति चान्द्रकान्तर्यां कातन्त्रच्छन्दःप्रक्रियायां नाम्नि चतुष्टये

षष्ठः पादः।

---

# कातन्त्रच्छन्दःप्रक्रियायामाख्यातस्य

## प्रथमः पादः ।

### परेऽपि प्रादयो धातोः ॥ १

प्रादयो निपाता धातोः परेऽपि प्रयुज्यन्ते । अपिशब्दात् पूर्व्वेऽपि ।

हन्ति नि मुष्टिना । निहन्ति मुष्टिना । का० । आ द्वाभ्यां हरिभ्यामिंद्र याह्या चतुर्भिरा षड्भिर्हूयमानः । ऋ० २।१८।४ ॥ पुरू चर द्वचा हनति नि दस्यून् । ऋ० ६।२९। ६ ॥ त्वं करोषि न्यञ्जलिकां त्वं करोषि नि जानुकां । तै० आ० । निकरोषीति संबन्धः । महो अर्णः सरस्वती प्र चेतयति केतुना । धियो विश्वा वि राजति । ऋ० १।३।१२ ॥

### व्यवहिताश्च ॥ २

व्यवहिताश्च प्रादयो निपाता धातोः प्रयुज्यन्ते । अविशेषात् परेऽपि पूर्व्वेऽपि ।

हरिभ्यां याह्योक आ । ऋ० ७। ३२ । ४ ॥ प्र देवत्रा ब्रह्मणे गातुरेतु । ऋ० १०।३०।१ ॥ आ नो देवानामुप वेतु शंसः । ऋ० १०।३१।१ ॥

## आविरादयश्च ॥ ३

आविरादयश्च धातोर्व्यवहिताः प्रयुज्यन्ते । चशब्दादव्यवहिताश्च ।

आविस्ते शुष्मो भवतु प्रियो मदः । ऋ० ९ । ७९ । ५ ॥ आविर्भव सुक्रतूया विवस्वते । ऋ० १। ३१।२ ॥

## व्यत्ययोबहुलं त्यादीनाम् ॥ ४

त्यादीनां बहुलं व्यत्ययो भवति ।

आ जातो विश्वा सद्मान्यप्राः । ऋ० १०।१।१ ॥ पूरयतीत्यर्थे प्रा पूरणे इत्यस्मात्तौ प्राप्ते सिः । इंद्रस्ते सोम सुतस्य पेयाः । ऋ० ९।१०९।२ ॥ पेयादिति प्राप्ते । द्राघीयांसमनु पश्येत पंथां । ऋ० १०।११७।५ ॥ पश्येदिति प्राप्ते । जजान सूर्यमुषसं सुदंसाः । ऋ० ३।३२।८ ॥ जनिर्व्यत्ययेन परस्मैपदम् ।

## परोक्षा भूते ॥ ५

अपरोक्षेऽपि भूते धातोः परोक्षा विभक्तिर्भवति । परोक्षे सिद्धैव ।

अहं द्यावापृथिवी आ ततान । मा० । अहं सूर्यमुभयतोददर्शाहं देवानां परमं गुहा यत् । मा० ८।८ ॥ अहं द्यावापृथिवी आ विवेश । ऋ० १०।१२५।६ ॥

## ह्यस्तन्यद्यतनीपरोक्षाः सर्व्वकालेष्वन्यतरस्याम् ॥ ६

सर्व्वेषु कालेषु ह्यस्तन्यद्यतनीपरोक्षाविभक्तयो भवन्ति वा। पक्षे यथास्वं प्रत्ययाः ।

ह्यस्तनी। अग्निमद्य होतारमवृणीतायं यजमानः। मा० २१।५९॥ सूपस्था अद्य देवो वनस्पतिरभवत्। तै० ब्रा० ३।६।१५॥ अद्यतनी। इदं तेभ्योऽकरं नमः। ऋ० १०।८५।१७॥ अहं तेभ्योऽकरं नमः। मा० १६।८॥ देवो देवेभिरागमत्। का०। परोक्षा। अद्या ममार स ह्यः समान। ऋ० १०।५५।५॥ धातुसंबन्धे विधिरयम्। उक्तोदाहरणेष धातुसंबन्धः पर्य्यन्वेष्य इत्याहुः।

## विध्यादिषु वर्त्तमाना ॥ ७

विध्यादिष्वर्थेषु वर्त्तमाना विभक्तिर्भवति वा। पक्षे यथास्वं प्रत्ययाः।

सुपेशसस्करति जोषिषद्धि। ऋ० २।३५।१॥ पताति कुंडृणाच्या। ऋ० १।२९।६॥ उदधिं च्यावयाति। का०। एवमन्यत्र। हेतुहेतुमद्भावोऽपि विध्यादिषूपसंख्येय इति मतम्।

## उपसंवादाशङ्कयोश्च ॥ ८

उपसंवादः पणबन्धः। तद्यथा। यदि मे भवानेतत् कुर्य्यादहमपि भवते एतद्दद्यामिति। कारणतः कार्य्यानु-

सरणमाशङ्का । उपसंवादे आशङ्कायां च गम्यमानायां वर्त्त-
माना विभक्तिर्भवति ।

उपसंवादे तावत् । अहमेव पशूनामीशै । मदधा एव
वो ग्रहा गृह्यान्तै । मद्देवत्यान्येव वः पात्राण्युच्यान्तै । का० ।
त्रिपुरविजये देवैरर्थितस्य भगवतोरुद्रस्योक्तिरियम् । आशङ्कायां
खल्वपि । नेज्जिह्मायन्तो नरकं पताम । का० । जिह्माचरणेन
नरकपात आशङ्क्यते ।

## सा लेट् ॥ ९

विध्याद्युपसंवादाशङ्कासु येयं वर्त्तमाना विहिता, सा लेट्-
संज्ञा भवति । लेट्प्रदेशा आदिरवर्णो लेटो लोपस्तेतो बहुल-
मित्येवमादयः ।

## बहुलं सार्व्वधातुकविकरणौ ॥ १०

सार्व्वधातुकसंज्ञा विकरणसंज्ञा च बहुलं भवति ।

वसूनि यानि भृण्विरे । ऋ० १।१५।८ ॥ परोक्षायाः सार्व्व-
धातुकत्वात् नुविकरणः आदेशश्च । तथा । ये परावति
सुन्विरे । ऋ० ८।५३।२ ॥ उप मामुच्चा युवतिर्बभूयाः ।
ऋ० १०।१८३।२ ॥ आशिषः सार्व्वधातुकत्वादन् विकरणः ।
तस्य लोपोद्विर्वचनमभ्यासस्यात्वञ्च । त्वां वर्द्धन्तु नो गिरः ।
ऋ० १।५।८ ॥ वर्द्धयन्त्विति प्राप्ते अनो विकरणसंज्ञाभावात्
कारितलोपः । विकरणत्वाद्गुणः ।

## आदिरवर्णो लेटो लोपस्तेतो बहुलम् ॥ ११

अवर्ण इत्यकाराकारयोर्ग्रहणम् । लेट आदिभूत अकार-आकारस्य भवति । इकारस्य च बहुलं लोपो भवति ।

अकारस्तावत् । प्रांधं श्रोणं च तारिषद्विवक्षसे । ऋ० १०।२५।११ ॥ सुपेशसस्करति जोषिषद्धि । ऋ० २।३५।१ ॥ वि क्रंदसी उर्वरासु ब्रवैते । ऋ०६।२५।४ ॥ अन्नकारयोरसन्ध्यक्षर-विधिः । आते इत्यस्याकारस्यैकारः । श्रेष्ठं सवं सविता सा-विषन्नः । ऋ० १।१६४।२६ ॥ आकारः खल्वपि । तिग्मा यदंतरशनिः पताति । ऋ० ४।१६।१७ ॥ स्वसा यद्दां विश्वगूर्तौ भराति । ऋ० १।१८०।२ ॥ प्रजा ते देवान् हविषा यजाति स्वर्ग उ त्वमपि मादयासे । ऋ० १०।८५।१८ ॥ कियात्या यत् समया भवाति । ऋ० १।११३।१० ॥ सुमंगलश्च शकुने भवासि । ऋ० २।४२ ॥ सूर्य्या मासा मिथ उच्चरातः । ऋ० १०।६८।१० ॥ शतं यथेमं शरदो नयाति । ऋ० १०।१६१।३ ॥ इह पूर्व्वेषूदा-हरणेष्विकारस्य लोपो न परेषु ।

## वसमसोः सकारस्य ॥ १२

समनन्तरो लोपोऽनुवर्त्तते । लेटो वसमसोः सकारस्य बहुलं लोपो भवति । करवाव । करवाम । न च भवति । करवावः । करवामः । का० ।

## अभ्यस्तानामाकारस्य ॥ १३

लेटि परतोऽभ्यस्तानामाकारस्य बहुलं लोपो भवति।

सोमो ददद्गंधर्वाय गंधर्वो दददग्नये। ऋ० १०।८५।४१ ॥ यो मे पृणाद्यो ददद्यो निबोधात्। ऋ० २।३०।७॥ दधद्रत्ना दाशुषे वार्याणि। ऋ० १।३५।८॥ दधद्रत्नानि दाशुषे। ऋ० ४।१५।३ ॥ न च भवति। यदग्निरग्नये ददात्। का०। अभ्यस्तानामिति किम्। सहस्रधारो यात्तना। ऋ०९।५२।२ ॥

## ऐराकारस्य ॥ १४

लेट आकारस्य स्थाने बहुलमैकारो भवति। अर्थादात्मनेपदप्रथममध्यमपुरुषद्विवचनयोः।

करवैते। करवैथे। मन्त्रयैते। मन्त्रयैथे। का०। सुतेभिः सुप्रयसा मादयैते। ऋ० ४।४१।३ ॥ विधानसामर्थ्यात् प्रतिपदोक्तग्रहणाच्चादिविहितस्याकारस्य न स्यात्। न च भवति। यस्मिन्निंद्रो वसुभिर्मादयाते। ऋ० ७।४७।२ ॥

## एकारस्यान्यत्र ॥ १५

अन्यत्रेत्यनन्तरो विधिरपेक्ष्यते। यत्र प्रयोगे ऐराकारस्येत्यनन्तरो विधिः प्रवर्त्तते, तं प्रयोगं वर्जयित्वा लेट एकारस्य बहुलमैकारो भवति।

सप्ताहानि श्रयै। अहमेव पशूनामीशै। मदग्राएव वो ग्रहा गृह्यान्तै। महेवत्यान्येव वः पात्राण्युच्यान्तै। का०।

सोम्य मधौ स्वाहेह मादयाध्वै । ऋ० ७।५९।६ ॥ न च भवति । दधं दधस उत्तरं । ऋ० ६।१६।१७ ॥ अध्वर्यवो यन्नरः कामयाध्वे । ऋ० २।१४।८ ॥ यद्यावमे विजने मादयासे । ऋ० १।१०१।८ ॥ अन्यत्रेति किम् । मादयैते । मन्त्रयैते । का० ।

## नाम्नःपरेच्छायामपि यिन् ॥ १६

नाम्नः परेच्छायामर्थे यिन् परो भवति । अपि शब्दादात्मेच्छायामपि ।

यो नो अग्ने अररिवाँ अघायुः । ऋ० १।१४७।४ ॥ बृहस्पतिर्नः परि पातु पश्चादुतोत्तरस्मादधरादघायोः । ऋ० १०।४२।११ ॥ उरुष्या णो अघायतः समस्मात् । ऋ० ५।२४।३ ॥ सर्वत्रान्योऽन्यस्याघमिच्छतीति यिन् । न हि कश्चिदात्मनोऽघमिच्छति । आत्मेच्छायां खल्वपि । जनीयंतो न्वग्रवः पुत्रीयंतः सुदानवः । ऋ० ७।९६।४ ॥ परेच्छायां विशेषविधिसामर्थ्याच्छन्दस्यात्मेच्छायां मा भूदित्याशङ्कानिरासार्थमपिग्रहणम् ।

## दीर्घोऽश्वाघयोर्यिनि बहुलम् ॥ १७

यिनि परतोऽश्व अघ इत्येतयोर्बहुलं दीर्घो भवति । अर्थादन्तस्य ।

अश्वो अश्वायते भव । ऋ० ६।४५।२६ ॥ अश्वायंतो वृषणं वाजयंतः । ऋ० ४।१७।१६ । जहि यो नो अघायति । ऋ० १।१३१।७ ॥ रक्ष राजन्नघायतः । ऋ० १।९१।८ ॥ न च भवति ।

अश्वयुर्गव्यू रथयुर्वसूयुः । ऋ० १।५१।१४ ॥ गव्या सोमासो-अश्वया । ऋ० ८।६४।४ ॥

## देवसुम्नयोर्यजुषि काठके ॥ १८

यिनि परतः देव सुम्न इत्येतयोरन्तस्य दीर्घो भवति । यजुषि । काठके प्रवचने ।

देवायन्तो यजमानाय । सुम्नायन्तो हवामहे । का० । नायं यजुःशब्दः शेषे यजुःशब्द इति परिभाषितयजुःपरः किन्तु यजुर्वेदपरः ।

यजुषीति किम् । देवान् जिगाति सुम्नयुः । का० । ऋग्वेदेऽपि खल्वस्ति कठशाखा । काठके इति किम् । यजु-र्वेदेऽपि शाखान्तरे मा भूत् । स सुम्वान न देवयो । तै० स० १।८।२२ ॥ अञ्जन्ति त्वामध्वरे देवयन्तः । तै० ब्रा० ३।६।१ ॥ देवान् जिगाति सुम्नयुः । तै० ब्रा० ३।५।२ ॥ इति तैत्तिरीयके प्रवचने ।

कथं, सुम्नायवः सुषमिधा समीधिरे । तै० ब्रा० १।२।१ ॥ इति तैत्तिरीयाः समामनन्ति । छान्दसोऽयं व्यत्ययः । यच्च ऋग्वेदादौ पठ्यते, तच्चेत् यजुषि काठके दृष्टं तत्राप्ययं विधि-रिति मतम् । अन्यत्र तु नैतस्यप्रवृत्तिः । तथाच । नरो यत्र देवयवो मदंति । ऋ० १।१५४।५ ॥ इति बह्वृचाः । अय मा देवयुं जनं । सा० छ० १।१।३।३ ॥ इति छन्दोगाः । यज्ञपतिं देवयुवं । मा० १।१२ ॥ इति वाजसनेयिनः ।

## अन्यत्रापि दृश्यते ॥ १९

यिनि परतोऽन्यत्रापि दीर्घो दृश्यते। मित्रायुवो न पूर्पतिं सुशिष्टौ। ऋ० १।१७३।१० ॥ भाष्ये त्वश्वाघ्ययोरेव छन्दसि दीर्घो नान्यस्येत्युक्तम्।

## नेत्वमपुत्रादेः ॥ २०

यिनि परतः पुत्रादिवर्ज्जितस्येत्वं न भवति। पुत्रादेस्तु भवत्येव। भरस्व सुम्नयुर्गिरः। ऋ० १।७८।१० ॥ सर्गो न यो देवयतामसर्जि। ऋ० १।१९०।२ ॥ अपुत्रादेरिति किम्। जनीयंतोन्वग्रवः पुत्रीयंतः सुदानवः। ऋ० ७।९।४६ ॥ पुत्रादिराकृतिगणः। यिन्यवर्णस्येत्यस्य बाधकोऽयम्।

## लोपः कव्यध्वरपृतनानामन्तस्यर्चि बहुलम् ॥ २१

यिनि परतः कवि अध्वर पृतना इत्येतेषामन्तस्य बहुलं लोपो भवति। ऋग्विषये प्रयोगे।

स पूर्व्वया निविदा कव्यतायोः। ऋ० १।९६।२ ॥ अध्वर्यवश्चक्रवांसो मधूनि। ऋ० ५।४३।३ ॥ वज्रेण शत्रुमवधीः पृतन्युं। ऋ० १।३३।१२ ॥ न च भवति। अपो वृणानः कवते कवीयन्। ऋ० ८।८४।१ ॥ उपब्रूषि यजस्यध्वरीयसि। ऋ० १०।९१।११ ॥ पुत्रादित्वादित्वम्। त्वमग्ने पृतनायूँरभि ष्याः। ऋ० १०।६९।६ ॥ कथं, सपत्नो यः पृतन्यति। तै० ब्रा० ३।३।११ ॥ इति तैत्तिरीयाणां लोपः। छान्दस।

## दुष्टद्रविणवृषरिष्टानां दुरोद्रविणोवृषण्रिषणः ॥ २२

दुष्ट द्रविण वृष रिष्ट इत्येतेषां स्थाने दुरस् द्रविणस् वृषण् रिषण् इत्येते आदेशा यथासंख्यं भवन्ति । यिनि परे ।

अवियोना दुरस्युः । का० । द्रविणस्युर्विपन्यया । सा० क० १।१।१।४ ॥ पवमानो वृषण्यति । ऋ० १०।५।६ ॥ सखायो-मा रिषण्यत । ऋ० ८।१।१ ॥ कथं, अत्यो न यूथे वृषयुः कनि-क्रदत् । ऋ० ६।७७।५ ॥ बहुलाधिकारादियमिष्टसिद्धिरिति । दुवस् परिचरणे कण्ड्वादौ पठ्यते । तस्मात् यिनि, स तु श्रुधि श्रुत्वा यो दुवोयुः । ऋ० ६।३६।५ ॥ इत्येवमादयः प्रयोगाः ।

इति चान्द्रकान्तायां कातन्त्रच्छन्दःप्रक्रियायामाख्याते प्रथमः पादः ।

कातन्त्रच्छन्दःप्रक्रियायामाख्याते

द्वितीयः पादः ।

## न चवर्गः कृषश्चेक्रीयिते ॥ १

चेक्रीयिते परतः कृषेरभ्यासस्य चवर्गो न भवति । अभ्यासस्यैव हि प्रसक्तिः ।

करीकृष्यते यज्ञकुणपः । का० । चेक्रीयिते इति किम् । चकृषे भूमिं प्रतिमानमोजसः । ऋ० १।५२।१२ ॥

## रोऽन्तश्चरादेरभ्यासस्य ॥ २

चेक्रीयिते परतश्चरादेरभ्यासस्य रेफागमो भवति ।

अनुष्टुभमनु चर्चूर्य्यमाणं । ऋ० १०।१२४।९ ॥ अनुस्वारागमो बाध्यते नोत्वम् । कविर्बुध्नं परि मर्मृज्यते धीः । ऋ० १।९५।८ ॥ मर्मृज्यमान आयुभिः । ऋ० ९।६२।१३ ॥ वायुर्न पर्फरत् चयद्रयीणां । १०।१०६।७ ॥ अन्तग्रहणमागमार्थम् । चरादिराकृतिगणः ।

## बहुलं लुक् चेक्रीयितस्य चर्करीतञ्च धातुः ॥ ३

चेक्रीयितस्य बहुलं लुग्भवति । तस्मिंश्च सति धातुश्चर्करीतसंज्ञो भवति । चर्करीतप्रदेशाः चेक्रीयितवच्चर्करीतस्येत्येवमादयः । चेक्रीयितलुकोऽपि चर्करीतसंज्ञा प्राचाम् ।

## चेक्रीयितवच्चर्करीतस्य ॥ ४ ॥

चर्करीतस्य धातोश्चेक्रीयिते इव कार्य्यं भवति ।

रूपं रूपं मघवा बोभवीति । ऋ० ३।५३।८ ॥ कार्य्याति-देशोऽयम् ।

## कर्त्तरि परस्मैपदम् ॥ ५

चर्करीताद्धातोः कर्त्तर्य्यभिधेये परस्मैपदं भवति ।

बोभवीति । चेक्रीयितवदित्यतिदेशबाधनार्थमिदम् । गण-कारवचनप्रमाणार्थं च । कथं, गुहा वा चर्कृषे गिरा । ऋ० १०।२२।१ ॥ कर्म्मण्यतदात्मनेपदं न कर्त्तरि । वचनव्यत्ययो-यणभावश्च च्छान्दसः ।

## ईड्वचनादिरन्यतरस्याम् ॥ ६

चर्करीताद्धातोर्वचनादिरीड् भवति वा ।

रूपं रूपं मघवा बोभवीति । त्रिधा बद्धो वृषभो रोरवीति । ऋ० ४।५८।३ ॥ महश्चर्कर्म्यर्वतः क्रतुप्रा । ऋ० ४।३९।२ ॥

## अन्यस्मादपि दृश्यते ॥ ७

अन्यस्मादपि वचनादिरीड् विभाषा दृश्यते ।

उत्तवीति उत्तौति । उपरवीति । उपरौति । उपस्तवीति । उपस्तौति । शमीध्वम् । शाम्यध्वम् । अभ्यमीति । अभ्य-मति । तु इत्यगणपरिपठितो धातुः । शमीध्वमभ्यमीति

इत्यनयोर्विकरणलोपः । तद्दमे च्छन्दस्येव प्रयुज्यन्ते इत्यापि-शलीयाः । भाषायामपीति पाणिनीयाः ।

## चवर्गः कृषेरभ्यासस्य ॥ ८ ॥

अन्यतरस्यामिति न स्मर्य्यते । चर्करीतन्त्वनुवर्त्तते । चर्करीतस्य कृषेरभ्यासस्य चवर्गो भवति ।

गोभिर्यवं न चर्कृषत् । ऋ० १।२३।१५ ॥ गाय गाइव चर्कृषत् । ऋ० ८।२०।१९ ॥ चेक्रीयितवदित्यतिदेशेन चवर्ग-निषेधे प्राप्ते वचनम् ।

## ऋमतोरिरी च ॥ ९

ऋमतोधातोश्चर्करीताभ्यासस्य रिरी च भवतः । चकाराद्री च । चरिकर्त्ति । चर्कर्त्ति । चरीकर्त्ति । चरिकरीति । चर्करीति । चरीकरीति । वरिवर्त्ति । वर्वर्त्ति । वरीवर्त्ति । वरिवरीति । वर्वरीति । वरीवरीति । एवमन्येऽपि । वर्वर्त्ति चक्रं परि द्यामृतस्य । ऋ० १।१६४।११ ॥ आ वरीवर्त्ति भुवनेष्वंतः । ऋ० १।१६४।३१ ॥ आ ये वयो न वर्वृतति । ऋ० ६।४६।१४ ॥ प्रवातेजा इरिणे वर्वृताना: । ऋ० १०।३४।१ ॥ तं मर्मृजानं महिषं न सानौ । ऋ० ९।९५।४ ॥ पश्चेव चर्चरं जारं मरायु छद्मेवार्थेषु तर्तरीथ उग्रा । ऋ० १०।१०६।७ ॥ कथं, दिव-स्पृथिव्या उत चर्किराम । ऋ० ४।३९।१ ॥ किरतेरूपम् । लेटोमस् । ऋकारस्योपलक्षणत्वात् । व्यत्ययाद्वा ।

## बोभूतु तेतिक्ते ॥ १०

एतौ निपात्येते । भवतेश्चर्करीतस्याभ्यस्तस्य गुणाभावस्तिजेरात्मनेपदञ्च निपात्यते ।

बोभूतु । तेतिक्ते । तेतिक्ते तिग्मा तुजसे अनीका । ऋ० ४।२३।७ ॥ भवतेर्निपातनं ज्ञापयति भाषायां गुणोऽस्तीत्याहुः । कथं, दाधर्त्ति । धृञो धारयतेर्वा चेक्रीयितलुकि रेफागमं बाधित्वा तुजादित्वादभ्यासस्य दीर्घः । तथा । दर्दर्त्ति-दर्धर्षि । त्वमया दर्धर्षोजसा । ऋ० ५।८४।२ । वाजं दर्दर्षि स किलासि सत्यः । ऋ० २।१०।१५ ॥ इत्यादयोऽप्यनुसर्त्तव्याः ।

## नामिनोगुणोबहुलमुपधान्तस्य ॥ ११

उपधाभूतस्यान्तभूतस्य च नामिनो बहुलं गुणो भवति ।

जुजोषदिंद्रो दस्मवर्चाः । ऋ० १।१७३।४ ॥ जरसा मरते पतिः । ऋ० १०।८६।११ ॥ अभ्यासस्यापि । प्र ते मह्नीं सुमतिं वेविदाम । ऋ० ७।२४।६ ॥ आ ये वयो न वर्वृतति । ऋ० ६।४६।१४ ॥

नामिन इति किम् । गोभिः संनद्धा पतति प्रसूता । ऋ० ६।७५।११ ॥ याति देवः प्रवता यात्युद्वता । ऋ० १।३५।३ ॥ उपधान्तस्येति किम् । वि रोरुवज्जठरे विश्वमुक्षते । ऋ० १०।६८।२।५ ॥ कथं, गाः पश्यमानस्तविषीरधत्त । ऋ० १०।१०२।८ ॥ अनम्नन्तन्यो अभिचाकशीति । ऋ० १।१६४।२४ ॥

ऋतस्य हि धेनवो वावशानाः । ऋ० १।७३।६ ॥ सम्निकभि-वश्विभिः सिद्धम् ।

## सिच् सार्वधातुके कर्त्तरि ॥ १२

कर्त्तरि विहिते सार्व्वधातुके परतो धातोर्बहुलं सिज् भवति । सिचोऽस्य विकरणसंज्ञेष्यते ।

स नो नेषन्नेषतमैरमूरः । ऋ० १।१४१।१२ ॥ न च भवति । अग्निर्नयन्नववास्त्वं बृहद्रथं । ऋ० १।३६।१८ ॥

## गुणः सिचि विकरणे ॥ १३

विकरणसंज्ञके सिचि परतो धातोर्बहुलं गुणो भवति ।

सो असाँ अभयतमेन नेषत् । ऋ० १०।१७।५ ॥ तथा । नयिष्ठा उ नो नेषणि । ऋ० १०।१२६।३ ॥ अद्यतन्याः ह्यस्त-न्यावा सार्व्वधातुकत्वात् विकरणः सिच् गुणोऽड़भावश्च । अवि-करणे तु सिचि, सिचि परस्मै स्वरान्तानामिति वृद्धिः । नातारी-दस्य समृतिं वधानां । ऋ० १।३२।६ ॥ न च भवति । पर्यग्नि-मह्रषत । ऋ० १०।१५५।५ ॥ प्रपञ्चार्थमिदम् ।

## इट् चादिः ॥ १४

विकरणसंज्ञकस्य सिच आदिर्बहुलमिड़ागमो भवति ।

नयिष्ठा उ नो नेषणि । न च भवति । पुनर्नैषदघशंसाय मर्म । ऋ० १०।१८२।१ ॥

## क्र्यादेर्व्यञ्जनान्ताद्दायः ॥ १५

क्र्यादेर्गणाद्व्यञ्जनान्ताद्बहुलमायो विकरणो भवति। कर्त्तरि विहिते सार्व्वधातुके परे।

राजन् त्सोमो प्रति हव्या गृभाय। ऋ० १।६१।४ ॥ स संस्तिरो विष्टिरः सं गृभायति। ऋ० १।१४०।७ ॥ गृभायत रक्षसः सं पिनष्टन। ऋ० ७।१०४।१८ ॥ न च भवति। गृह्णामि ते सौभगत्वाय हस्तं। न गृभ्णांगान्यपि परेहि। ऋ० १०।१०३।१२ ॥ गृभ्णाति रिप्रमविरस्य तान्वा। ऋ० ८।७८।१ ॥ शुक्रा गृभ्णीत मंथिना। ऋ० ८।४६।४ ॥

क्र्यादेरिति किम्। गच्छामित्रान् प्र पद्यस्व। ऋ० ६।७५।१६ ॥ व्यञ्जनान्तस्येति किम्। प्रीणीते अग्निरीळितो न होता। ऋ० ७।७।३ ॥

## लोपव्यत्ययौ विकरणस्य ॥ १६

विकरणस्य लोपो व्यत्ययश्च बहुलं भवति। लोपस्तावत् क्वचित् प्राप्तोऽपि न प्रवर्त्तते क्वचिदप्राप्तोऽपि प्रवर्त्तते।

अहिः शयत उपपृक् पृथिव्याः। ऋ० १।३२।५ ॥ पृथिव्याः आपृगमुया शयंते। ऋ० १०।८९।१४ ॥ पुरू च वृत्रा हनति नि दस्यून्। ऋ० ६।२९।६ ॥ एष्वदादेर्लुग्विकरणस्येति प्राप्तो-लोपो न प्रवर्त्तते। शेते शेरते हन्तीति भाषायाम्। चाध्वं नो देवा निजुरो वृकस्य। ऋ० २।२९।६ ॥ मरुत्वती धृषती जेषि

अवून् । ऋ० २।३०।८ ॥ सखायं ऊध्वं शिवो नो अस्तु । ऋ० ७।३४।१५ ॥ एष्वप्राप्तः प्रवर्त्तते । त्रायध्वं जयसि कुरुध्वमिति भाषायाम् ।

व्यत्ययः खल्वपि । अन्यस्य विषयेऽन्यस्य प्रवृत्तिरेकचानेकेषां प्रवृत्तिश्च । आंडा शुष्णस्य भेदति । ऋ० ८।४०।११ ॥ भिनत्तीति प्राप्ते नशब्दविषये अन् । अनु व्रतान्यदितेर्ऋधंतः । ऋ० ७।८७।७ ॥ ऋध्नुवन्त इति प्राप्ते नुविषये अन् । स्वध्वरा करति जातवेदाः । ऋ० ६।१०।१ ॥ करोतीति प्राप्ते उविषये अन् । तथा, जेष्ठ आह चमसा द्वा करेति कनीयान् त्रीन् कृणवामेत्याह । ऋ० ४।३३।५ ॥ उविषये अन् नुश्च विकरणः । विद्वान् पथः पुरएत ऋजु नेषति । ऋ० ५।४६।१ ॥ नयतीति प्राप्ते सिजनौ विकरणौ । इंद्रेण युजा तरुषेम वृत्रं । ऋ० ७।४८।२ ॥ तरेमेति प्राप्ते उसिजनस्त्रयोविकरणाः । एवमन्येऽपि ।

## इदन्तो मसः ॥ १७

मस् इत्येतस्माद्बहुलमिकारोऽन्तो भवति ।

इंद्रो सखित्वमुश्मसि । ऋ० ८।२१।६ ॥ उश्म इति प्राप्ते । हितेनैव जयामसि । ऋ० ४।५७।१ ॥ जयाम इति प्राप्ते । नमो भरन्त एमसि । मा० ३।२२ ॥ आङ्पूर्वादितेर्मस् । एम इति प्राप्ते । त्वं राजन् पारयामसि । मा० १२।८६ ॥ पारयाम इति प्राप्ते । अनाशस्ता इव स्मसि । ऋ० १।२६।१ ॥

वस्मेमसि । स्म इति प्राप्ते । अच्छा च त्वैना नमसा वदामसि । ऋ० ८।२१।६ ॥ वदाम इति प्राप्ते । अव धन्वानि तन्मसि । मा० १६।५४ ॥ तन्म इति प्राप्ते ।

न च भवति । स्मो वयं संति नो धियः । ऋ० ८।२१।६ ॥ मंत्रैरग्निं कविमच्छा वदामः । ऋ० १०।८८।१४ ॥ कुर्मस्त आयुरजरं यदग्ने । ऋ० १०।५१।७ ॥ न चैतद्विद्मो वयं ब्राह्मणा वा स्मो अब्राह्मणा वा । मो० भा० । ते यं द्विष्मो यश्च नो द्वेष्टि तमेषां जम्भे दध्मः । मा० १६।६४ ॥ अन्तग्रहण-मागमार्थम् ।

## रिर्धातोः ॥ १८

इकार उच्चारणार्थः । अन्तग्रहणमनुवर्त्तते । धातोः परो-बहुलं रेफागमो भवति ।

विश्वा इत्ते धेनवो दुह्र आशिरं घृतं दुह्रत आशिरं । ऋ० १।१३४।६ ॥ दुहन्तीति प्राप्ते तलोपे दुह्रे तलोपाभावे दुह्रते । प्रति यदापो अदृश्रमायतीः । ऋ० १०।३०।१३ ॥ अपश्यमिति प्राप्ते । एत उ त्ये प्रत्यदृश्रन् । ऋ० १।१६१।५ ॥ अपश्यन्निति प्राप्ते । असृग्रन् देववीतये । ऋ० ६।४६।१ ॥ असृजन्निति प्राप्ते । घोषाः घोरं दुह्रते गावो अस्य । ऋ० १।१६४।७ ॥ न च भवति । गिरो अपश्यं पथिभिः सुगेभिः । ऋ० १।१६३।६ ॥ सं वज्रेणासृजद्वृत्रमिंद्रः । ऋ० १।८२।१२ ॥

## लोपस्तस्यात्मने ॥ १९ ॥

ते अकार उच्चारणार्थः । आत्मने पदे यस्तकारस्तस्य बहुलं लोपो भवति ।

गन्धर्व्वा अप्सरसो अदुह्र । अदुहतेति प्राप्ते । दुहामश्विभ्यां पयो अघ्नेयं । ऋ० १।१६४।२७ ॥ सा नः पयस्वती दुहां । ऋ० ४।५७।७ ॥ दुग्धामिति प्राप्ते । शये वव्रिश्चरति जिह्वयादन् । ऋ० १०।४।४ ॥ शेते इति प्राप्ते । न च भवति । मा मामिमे पतत्रिणी वि दुग्धां । ऋ० १।१५८।४ ॥ समुद्रे अंतः शयते । ऋ० ८।१००।९ ॥ याः शुक्रं दुहते पयः । ऋ० ९।१९।५ ॥

तस्येति किम् । सबर्दुं धेनुमस्वं दुहध्यै । ऋ० १०।६१।१७ ॥ आत्मने इति किम् । वत्सं दुहंति स्तनयंतमक्षितं । ऋ० १।६४।६ ॥

## आदेरमोऽद्यतन्याः ॥ २०

अद्यतन्या अम आदेर्बहुलं लोपो भवति ।

वधीं वृत्रं मरुत इंद्रियेण । ऋ० १।१६५।८ ॥ हन्तेरद्यतन्या अम् । अड्भावः । अम आदिलोपः । सिच्प्रत्ययश्चेट् । सिचो लोपः । अवधिषमिति प्राप्ते । आ द्यो- मूर्धानमक्रमीं । ऋ० १०।१६६।५ ॥ अक्रमिषमिति प्राप्ते ।